वासयथार्थन्यायविशारदपदसदालोकलोकलोचनलोत्तकानेकदुस्तरतर्करत्नाकरग्रंथशतविधानवितीर्णन्यायाचार्यपदाप्तक्रिया-
करणासादितगणयुपाध्यायवाचकादिपदाः श्रीमद्यशोविजयचरणाश्च ऐंकारांकं संस्थापयामासुः प्रतिग्रंथमारंभे, परमाद्यानां
प्रायश्चित्तप्रतिपत्तिसंबंधादन्येषां चोपगंगमैंकारजापविधानात्कवित्वविस्त्वप्राप्तिसद्भावाद्यथांककरणे स्पष्टतरमुपलक्ष्यते लक्षणा-
दिदृक्षैः प्रयोजनं परं नैषां पूज्यानां प्रोक्तमन्तरेणान्यत्, भविष्यति च कदाचित्तत्परन्न तदस्माभिर्न्यलक्षि यदि परं स्यात्के-
षांचित् ज्ञातं ज्ञापनीया वयमुपकारधिया। अनन्तरं चापरगुरुस्मरणस्यावश्यकतामभिमन्यमानैरभियुक्तैरभियुक्तदेवतास्मरण-
स्थानीयं यथार्थाभिधानभृतां श्रीज्ञानसागरनामधेयानां स्मरणमकारि समुददीपि च प्रस्तुतप्रकरणप्रकरणपटिष्ठोपदेशनि-
दानताज्ञापनेन तेषां त्रैविद्यनदीष्णता, जायेतैवच जिज्ञासा जिज्ञासूनां श्रीमद्विषयिणी, सा च समापनीया सुधीभिः प्रकरण-
कृद्विहितगुर्वावलीगततत्प्रकरणावलोकनेन तद्यथा " श्रीसोमसुंदरगुरुप्रमुखास्तदीयं, त्रैविद्यसागरमगाधमिवावगाह्य ॥
प्राप्योत्तरार्थमणिराशिमनर्घ्यलक्ष्मीलीलापदं प्रदधते पुरुषोत्तमत्वम् ॥ १ ॥ " श्रीसोमसुंदराचार्यप्रवरा ये प्रकरणकृद्गुर-
वस्तेऽपि श्रीपूज्यपादवितीर्णोपदेशामृतपानपीनाः, अनेन य आचचक्षिरेऽनवलब्धग्रन्थसतत्त्वाः यदुत 'न भट्टारकाः श्रीसोम-
सुंदरपादान्तेवासिनः कथमन्यथा भवेयुर्द्वयेऽपि सहाध्यायिनः कथंकारं च प्रायः समानवयस्कानां गुरुशिष्यभावोऽ-
संभव्येव च लघीयश्च शिष्यार्पणं पूज्येभ्यः कुर्युः श्रीदेवसुंदरमिश्राः इतीति ' केचित् परमविचारितरामणीयकमेतत् यतः
ख्यापयन्त्येव पूज्यपादाः स्वयमेव श्रीमद्दीक्षितत्वमात्मनां शिष्यतामप्रतिमां च । "शिष्यस्तदीयोऽयमपीतिमन्यते श्रीवा-
चकेन्द्रेष्वगुणोऽपि मादृशः ॥ ग्रहप्रभोः पुत्र इति ग्रहावलौ न पूज्यते पंगुरपीह किं शनिः ॥ २० ॥ अहो तेषां कराम्भो-

नरागानां सुमनायता ॥ जातो येभ्यस्त्रिगैर्योग्योऽप्यदकं मुनिसुंदरः ॥ २१ ॥" इति गुर्वावलीगौरवाविष्कर्त्र्यां गुर्वावल्यां। तत्र
श्राफ्तनाः कल्पनाशिल्पनिर्मिता विकल्पकल्लोलाः प्लावयितुं स्युः श्रीसोमसुंदरसूरिपट्टे एकपञ्चाशत्तमः श्रीमुनिसुंदर इत्या-
द्रिव्याख्यानकुशलं मनविष्णवः। प्रायः समानवयस्कत्वादिकारणानि चालक्षितसाधुपदगौरवार्हाणामेव चेतसि विदध्यु-
गामनां ननु विशालगुरुपदैदंपर्यैतिह्यासानां। यच्च विद्यमानेष्वपि किमिति सोमसुंदरसूरिषु श्रीमद्देवसुंदरपादवर्णनमित्यनूद्यते
तद्ध्यमर्मनममेय, यतो ह्येऽपि वेविद्यमाना एव ते, सत्सु च देवपादेषु यत्सोमगुरुपादवर्णनं तदेव तेषां तच्छिष्यतासूचक-
मित्यलं विशेषेण, वर्णनीयता तु श्रीमद्देवसुंदरपादानामसमभक्तिप्राग्भारनिर्भृतहृदयस्मरणीयत्वद्योतनाय, बृहद्गच्छाधीशत्वेन
पूज्यपूज्यानां चातिशयितपूजास्पदत्वस्याव्याहतेश्चात एव च तद्विनेय इत्यभिहितं श्रीमद्भिः सामान्यतस्तदीयता प्रबन्धेन
श्रीमतां दीक्षागुरवः श्रीसोमसुंदरचरणा ज्ञानगुरवः श्रीमन्तो ज्ञानसागरा ज्ञानसागरा गच्छाधिपाश्चोद्देशाद्यतुच्छफलकल्पन-
कल्पमहीरुहमाना देववदाराध्यपादाः श्रीयुतो देवसुंदरसूरय इति निर्णयोनाबाधोऽव्याहतश्च, ज्ञानसागरगुरूणां त्रैवैद्यवि-
पयोपदेशाश्रय इति तदणीयोमहिमाख्यानं। ततो गोष्ठीविधानभूमिकल्पो विद्वद्विधानयोग्यायोग्यपरीक्षणसम्यग्विज्ञात-
वाङ्मयविद्वत्समागमोज्जयानन्दनन्दिश्चक्रे वक्रेतराशयैः, पश्चाच्छास्त्राभ्यासानुयोगावसरोदीर्णप्रतिज्ञा विशुद्धबुद्ध्याज्ञोगः १
सद्गुरुगमायोगः २ सद्गुरुविनयप्रयोगः ३ पुस्तकप्राप्तियोगः ४ प्रमत्तताबियोगः ५ सततोपयोगः ६ शुद्धसन्नियोगः ७
देशारोग्यजाग्यादीनि साधनान्यैदंयुगीनान्तेवासिवर्गाविमृश्यतमान्याचख्युः ख्यातमाहात्म्याः, आख्याय च विद्वद्गोष्ठीगुण-
गणान् ज्ञानद्रुमोन्मूलनमातंगत्रिवर्गविध्वंसनव्यग्रदर्पापाकरणप्रकरणेऽनेकाननणुप्रज्ञावत्पारावारांनिधीन् पुरुषसिंहान् यथार्था-

वासान्निधानश्रीमद्दिवाकरवादिचक्रचूडामणिप्रभृश्रीमल्लवादिमनोहारिन्नचरनिर्जितमोहमोपकोपरूपश्रीमरुरिजदसर्वविसंवादिनिर्मूलस्वकल्पनाशिल्पिमात्रनिर्मितग्रंथततिवितननविज्ञापगतलज्जादिगम्बरमदनिर्मथनदेवसूरिसख्यश्रीदेवसूरिब्रह्मगोचरातिगनिरवद्यचातुर्विद्यविधानविज्ञामारिपटहोद्घोषणख्यापिताजयप्रदत्वगुणमहिममहीपालकुमारपालकुमुदकौमुदीपतिश्रीहेमचन्द्राचार्यप्रभृतीन् ज्ञानरत्नरत्नाकराणां कृत्यमतनुप्रभावं गुणोपार्जनावश्यकतां गुणवद्गृह्यतां लोकानामाराध्यतमतां च गुणिनामाविर्भावयामासुः । लक्षणगोष्ठ्यां अन्तरेणेङ्क् अध्ययने इतिधातुं अधीये इति १ उच्यतीति २ व्याघ्रा इति ३ जागृक् निद्राक्षय इत्यंतरा जागर्त्ति इत्यादीनि त्याद्यन्तानि, पंचक्लानीतिसमासे त्यादौ त्रयोदश रूपाणि धातोरेकस्यासंसृष्टानि, विना गर्मि जगामेति, मारिरेकाम, मामिनीत्राम, मान्ध्यां (मान्यां) दधिसेक् इत्यादीनि रूपाणि, गतिकारक इति, नित्याद्न्तरंगं वलीय इति च न्यायः; छंदोनुशासनगोष्ठ्यां मागध्यां ९७५००००००० उपहासिन्यां ४५५९७५०००ं० आर्यायां ८२९२०००० भेदाः, प्रस्तारादयः षट् प्रत्ययाः; काव्यगोष्ठ्यां काव्यलक्षणं शब्दार्थभेदाः दोषा गुणा भूषणानि अर्थवैचित्र्यहेतवः, प्रमाणगोष्ठ्यां च प्रामाणिकभेदाः देवगुरुधर्मतत्त्वलक्षणानि । प्रस्तावनामात्रमेतदखिलमर्हद्देवनिर्ग्रन्थगुरुनिष्कलंकधर्मयथास्थितवस्तुतत्त्वप्रतिपादनस्य । देवलक्षणं तत्र तावद्विपश्चिद्वृन्दवेद्यविद्यावर्यता निजगदु रागादिदोषानालीढत्वममलकेवलपरिवृढितां प्रतिहतात्मगुणप्रहननप्रत्यलघातिकर्मनिचयतां प्रशमामृतनिमग्नवदनेन्दुविकस्वरारविन्ददलप्रख्यनयनद्वन्द्वज्ञापितक्रोधादितिरस्कृतिं बालकमनीयकामिनीशून्यांकानुमापितस्मरतिरस्कारं द्विपदारणदसास्त्रायोगख्यापितदोषप्लोषं; व्यतिरेकं निदर्शयामासुरन्येषां विस्तरतोऽतथात्वं अरक्तद्विष्टानां देवतत्त्वपरीक्षणाय परीक्षाचणाः ।

प्रोक्तवन्तः प्रवचनसौधस्तम्भश्रीमद्धारिभद्रीयलोकतत्त्ववचांसि नेत्रैर्निरीक्ष्येत्यादितो यस्य निखिलाश्च दोषा इत्येतदन्तं श्लोकितदेवतत्त्वाय लोकश्लोकास्पदाञ्छ्लोकान्, तत्रेशः किमिति, ब्रह्मा चर्माक्षसूत्रीति च पद्ययुगल्यामलया परोक्तमप्यन्वयाद्विपुर्दैवस्वरूपनिरूपकं । प्रतिपादितौ परेण मनुष्यमात्रासर्वज्ञत्वाख्यावदेवत्वदर्शकौ निषेधाय देवत्वस्यासिद्ध्यादिदोषाघ्रातत्वदर्शनेन निरस्यासमकल्याणकरणप्रवणकल्याणकमहिमोद्भावनेन निरचैषुश्चैतन्नाम्नुचणाः श्रीजिनस्यैव यथार्थां देवतत्त्वावतारितां लोकातिगाबाधावस्थानां च सिद्धानां प्लुष्टानन्तकालप्रचितमूलनिचयकर्मनिकराणां स्वभावज्ञानदर्शनवीर्यसुखानंत्ययुक्तानामिति । गरिमगुरुतास्पदश्रीगुरुतत्त्वपरीक्षणे समस्तश्रेयोवितरणदक्षसम्यग्दर्शनज्ञानचरणाराधनचञ्चत्सदुपदेशनपराः पञ्चमहाव्रतीधूर्धरणधौरेया गौरवार्हा गुरवो निरचायिषत निश्चयाख्याननिपुणैः, प्रणिगदितं चागमनिष्णातैरारम्भपरिग्रहनिरतानामगुरुत्वं माध्यस्थ्येन । अभ्युदयनिःश्रेयससाधनसाधीयोधर्मनिरूपणे अभयदानं मिथ्यावचनादत्तादानाब्रह्मपरिग्रहेभ्यो निवृत्तिः क्रोधमानमायालोभाभिधानकषायचतुष्कधिक्कृतिः विनयार्जवादिगुणाधिकारश्च यत्र सुप्रयत्नप्रतिपादितः स एव धर्मः, कुतीर्थिककथितस्य तु तस्यातथात्वं जीवतत्त्वावबोधवल्लक्षणप्रयत्नाभावादसर्वज्ञप्रणीतत्वान्निस्त्रिंशपरिगृहीतत्वाच्च ततं ततबोधांशुभिः पूज्यैः । तत्राद्ये हेतौ स्नानादेर्धर्मता सप्रसंगं निराकृता प्रतिष्ठापितं चापां सजीवत्वं प्रकरणतो वीतरागाणामेव यथार्थवादित्वं च, द्वितीये च तदागमतत्प्रकाशकानामसर्वज्ञत्वं तदागमानां च परस्परविरुद्धार्थाभिधायकताविनाभाविता हिंसाद्यतिनिकृष्टोपदेशदानपटुता च साधिता, तृतीयस्मिंस्तु तस्मिन् सविस्तरं तत्परिगृहीतॄणां निस्त्रिंशता भवाभिनन्दिता च प्रादुर्भाविता । तदेवं देवगुरुधर्मरूपा तत्त्वत्रयी अत्रातततनुबोधैः शैशवे-

प्यशैशवमतिभिरिति यथार्थाभिधास्य त्रैविद्यगोष्ठीति । यतो नात्र विश्वे वेविद्यते कापि विद्यावदातकल्याणपरा विहायै-
तत्तत्त्वत्रयीं, वेदनाद्विचारणात् प्रापणार्हत्वाच्चास्या नांशतोऽपि विद्यात्वं जंघन्यते । यथावदवबोधश्चासमाप्ति निरीक्षणादेवास्या
भावी, नहि सूर्यप्रयोजनं मुकुराक्रान्ततद्बिम्बेन बोभूयमानमवलोक्यते । तथा चाशासे लब्धानया प्रस्तावनया प्रमेयं प्रमेयं
समग्रामेनामध्येतुं श्रोतुं वा प्रयतेरन् प्रवर्तेरंश्चैतदभिहिते तत्त्वत्रयाराधनेऽनल्पकल्पनातिगफलसंपत्तिसंपादनसमर्थे इति
सागरान्तानन्दनामधेयः ॥

पूज्यानां चरित्रं नात्र विस्तरतो निरूपितं सोमसौभाग्यहीरसौभाग्यगुर्वाल्यादिषु मुद्रितचरेषु यथार्हं निरूपितत्वा-
न्निरूपकैः, स्खलनायाश्च छद्मस्थस्वभावत्वादनाग्रहाया यदि कोऽप्यत्र मुद्रणादौ भवेद्दोषः प्रमार्ज्यः परमकारुणिकैर्विधाय
करुणामनुग्रहाभिलाषुके मयि, ज्ञापयितव्यश्च यदस्मिन्नस्मिन् स्थानेऽमुकोऽमुको दोषो यतो द्वितीयावृत्तौ विदधामि
विशोधनं, तस्येहजातदोषस्य च वितरामि मिथ्यादुष्कृतं सकलजिनमार्गाराधनसावधानपूज्यचरणश्रीसंघसमक्षमिति
१९६६ आश्विनशुक्लषष्ठ्यां सुरतपत्तनेऽलेख्यानन्देन ॥

# सहस्रावधानधुराधरणधौरेयश्रीमुनिसुंदरसूरीश्वर-
# कृता श्रीत्रैविद्यगोष्ठी

॥ ए॑ ॥ नमः सर्वविदे । विघ्नवल्लिविध्वंसिने कुठाररूपाय गुरवे नमः । ऐंनमः ॥ जयश्रीलीलालीवितरतु ममानंतमहिमा, जिनः श्रीमान् वीरस्त्रिभुवनविभुः सर्वकलनः । प्रवादा यस्यैवागमजलनिधेरत्र निखिलाः समादाय स्वैरं कतिपयलवान् सत्त्वमजनन् ॥ १ ॥ श्रीज्ञानसागराह्वस्वगुरूणां श्रुतवारिधिं । उपजीव्योपदेशं च कुर्वे त्रैविद्यगोष्ठिकां २ । नमो विततैकांतिकात्यंतिकहितहेतुभ्यः श्रीमद्गुरुभ्यः । इह किल स्वपरसमयार्थसार्थादूष्यनैदूष्यपरिकर्मितमतयो विज्ञपतयः प्रायस्त्रैविद्यगोष्ठीरतयो भवंतीति तन्मनोविनोदाय तद्विषये किंचिदुच्यते । तत्र त्रेधाः प्रायो विदग्धा उपलभ्यंते । तथाहि । केचन परमतमप्राचीनागण्यपुण्यप्रचयोपलब्धश्रीमद्गुरुचरणपरिचर्याप्रसादप्राप्तानवद्यविद्याविलासोपहृतसहृदयहृदया अपि अवगतवस्तुसतत्त्वतया न कदाप्यभिमानकालुष्यमाशेश्लिष्यंते ? केचन च किंचित्प्राचीनप्रचिताप्रधानकर्ममर्मवशतो निष्प्रतिमप्रतिज्ञातिरेकोद्भवाहंकारप्रचारप्रचारिताविवेका अपि सुयुक्तियुक्तोपदेशश्रवणादिना, स्वतोप्यधिकतरप्रज्ञाप्रकर्षप्रतिहतप्रवीणप्रकरप्रमाणप्रज्ञिलताभिमानप्रकृष्टप्राज्ञपुरुषविशेषसमीक्षणादिना वा, व्यपहायावलेपाक्षेपं सम्यग्गुणानुरागासंगिनो बो-

र्भूयुः । इह कतिचित्पुरुषा अनादिकालमपारसंसारकांतारोदरप्रसरणोपार्जितानिष्टकष्टौघहेरम्बपुष्टदुष्टादृष्टरक्षोधिष्ठिता विशिष्टमार्गासंसर्गिणः कथमपि परमतमप्रयासप्रसाधितकतिपयशास्त्राभ्यासा अपि परमार्थतो निविरूजडिमप्रचंडिमावष्टब्धचेतस्कतया शृण्वंतोऽपि तत्तन्निर्व्यपदेशोपदेशं, पश्यंतोऽपि च बहुरत्नायां वसुंधरायां तारतम्येन स्वतोऽधिकाधिकतरनिस्तुषमनीषासमुन्मेषोल्लासिप्रवीणव्रातान्, अखर्वगर्वपर्वतारूढमूढचेतोवृत्तितया न कदापि गुणानुरागानुषंगपूर्वकं मार्दवं व्रजति । अनर्हाश्चैते सर्वथा असाध्यामयप्रचयप्रपीडितांगागिवत् सदुपदेशादिप्रतीकारस्य, अनधिकृताश्च ते प्रबुद्धैरविबुधा विबुधजनोचितप्रशस्तशास्त्रगोष्ठीसुधापाने । आद्या द्वैधा अपि चाधिचक्रिरे तत्र सूरिभिः, परं द्वितीयाः साध्यव्याधिव्यथितांगभाज इव प्रधानतरौषधविधानेन यथाप्रस्तावमहंकारनिराकरणविषयोपदेशलेशेन प्रतिबोधनीया इति ।

अथैतेषामन्यतमभाग्योपलभ्ये संगमे समुपजाते सति यथोचितवचनादिप्रतिपत्तिपूर्वकमेवं स्याद् गोष्ठी । तथाहि । आगम्यतां भोः कोविदकुलावचूल अलंक्रियतामिदमासनं, किंचित्कलयथ. प्रतिकलमतुलकुशलकमलाक्रीडक्रोडासंक्रीडनेभृंगभूयं यूयं, प्रामोमोदीदद्य शुभवतां भवतां कलावतां दर्शनेन सद्योऽस्मच्चित्तचकोरः । उल्लसत्येव हि कलावतः समुदये अमलगुणरत्नरत्नाकरः । दुर्लभो हि धर्म्मव्रततिवितानोच्छेदकरालकरवाले बहुलदोषजालेऽस्मिन् कलिकाले विमलगुणमंडलाभरणभारिणां परमसौजन्यधारिणां दुर्गस्वर्गापवर्गमार्गप्रचारिणां अनवद्यविद्याविलासामराचार्यानुकारिणां सुविचारिणां सदाचारिणां संगमः । गमयत्येवायमनुत्तरो ह्युत्तरोत्तरोत्तमानेकगुणविवृद्धिहेतुः सेवधिरिव विधिवद्गुणिजनसन्निधिः परमसुखसंपदां पदं विनयादीनां नरं । किं नोक्तं चतुरचेतश्चमत्कारकारिहारिप्रचुरवाक्प्रबंधेन श्रीमता हर्षमिश्रेण सकलकविकुल-

प्रबलमदगदौपधे नैषधे नाम महाकाव्ये तथाहि । प्राणप्रियप्रणयिनीप्रवरगुणगणप्रगुणनप्रकटितप्रणयप्रकर्ष राजहंसावतंसं प्रति प्राह नल ईलापतिः । भृशतापभृता मया भवान् मरुदासादितुषारसारवान् । धनिनामितरः सतां पुनर्गुणवत्सन्निधिरेव सन्निधिः १ ॥ तद्युक्तमेवैतत् सकलकलंदिकाकलनाविकलकौशलशालिनां विमलविनयविवेकाद्यनणुगुणमालिनां शुभयतां भवतां संगमेन यदद्यामंदानंदसंदोहास्पदं भवामहे वयं । किंच भो यः खलु प्रबलकलिकालानुभावप्रसरदोपचक्रवालोच्छलद्बहुलधूलीपटलध्यामलितांतराले सकलेऽपि क्षितिमंडलतले दुर्लभतरमुपलभ्यापि प्रथितप्रवीणप्रकरप्रार्थितप्रगुणगुणगणसंगमं गुणिजनसंगमं, तत्तद्गुणानभिज्ञतया गुणिमत्सरितया वा न प्रकृष्टप्रमोदामोदमेदुरतां बिभर्त्ति, स खलु न प्रेक्षाचक्षुषां चक्षुषा प्रेक्षणीयः । यतो गुणानुराग एव मुख्यं लक्षणं वैचक्षण्यस्य, गुणानुरागश्च गुणवत्प्रेक्षणक्षण एवाक्षुण्णप्रमोदप्रकटनेनैव लक्ष्यः खलु दक्षैरक्षोदीयान् ॥ नागुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी । गुणी च गुणरागी च विरलः सरलो जनः १ ॥ तदद्य वंधो कृतकृत्याः स्मोऽनभ्रवृष्टिन्यायेनोपपन्नगुणवतां भवतां संगमेन । परं पीयूषेनेव तोषयितुमिच्छामः श्रवणौ भवन्निवासावासग्रामग्रामणीग्रामनामसंश्रवणेन । कुतो वा विपुलविपुलामंडलमंडलाखिलमंडलमंडलाखंडलाडंबरान्मंडलादत्र युष्मत्समागमः ।

अथ हंहो धीधन कैः २ प्रशस्तशास्त्रशस्त्रैर्निहत्य निखिलप्राणिप्रकरप्रेष्यताप्रदायिप्रसरद्विक्रमक्रमोद्रेकभाजं मोहराजं । दक्षिण क्षमध्ये लक्षणे विचक्षणाक्षोदीयोऽक्षूणाक्षामक्षोदं । कस्मिन् वाऐंद्र १ जैनेंद्र २ सिद्धहेमचंद्र ३ चांद्र ४ पाणिनि ५ सारस्वत ६ शाकटायन ७ वामन ८ विश्रांत ९ बुद्धिसागर १० सरस्वतीकंठाभरण ११ विद्याधर १२ मुष्टिव्याकरण

गोष्ठी.

१३ कलापक १४ भीमसेन १५ शिव १६ गौड १७ नंदि १८ जयोत्पल १९ जयदेवा २० इत्याकरणेष्वाम्नातिनो भवंतः । कं कं वा साहित्यशर्कराररसं स्वादं २ परमानंदपीयूषे निमग्ना भवच्चित्तवृत्तिः। तथा आटीकंते भवंतः सुघटनाटक-पेटकाभ्यासपटुपाटवप्रकटनैः स्फुटं नाटयंतः कीर्त्तिनर्टीं नाट्याचार्यतासंटकं । कैः २ अलंकारवारैरलंकारवारैरिव अलं समलंकृतं भवद्वदनं । आस्ते तावत्कर्कशतरतर्कवितर्कसंपर्ककर्कशधीत्वं । केषु २ वा जैनजैमिनिसुगतकणभक्षसांख्याक्षपादादिमतसंबंधिनानातर्कग्रंथसंदर्भेष्वधीतिनो यूयं । केषु २ चापरेष्वपि निश्छद्मछंदोज्योतिःप्रभृतिप्रशस्तशास्त्रप्रकरेष्वधीतिनो भवंत इति ।

धीमन्, युक्तमेवैतत् भवादृशां विशुद्धबुद्धिस्पृशां सम्यक्सारेतरवस्तुदृशां चारुचारिमोदारवर्यचातुर्यचमत्कृतचतुरविशां, यदेवं तेषु २ ग्रंथेषु क्रोडीकृताभ्यासः सदभ्यासः । किल शास्त्राभ्यास एव हि सारमसारसंसारे । तद्वतामेव यत्र तत्र तत्रभवतादर्शनात् । किंच । अस्तमीयिवांसः खलु ते त्रिभुवनभवनाभोगभासिनः सकलजगज्जंतुजातामितैकांतहितानुशासिनः प्रध्वस्ताशस्ततिमिरनिकराः सर्वज्ञदिवाकराः । अचकलच्चाविकलं सकलेऽपि क्षितितले कलिकालकालप्रदोषः स्वविलासकरालताप्रागल्भ्यं । अथच । प्रासरिसारिपुः सर्वतोऽप्यनिवारप्रचाराः प्रचुरतरतिमिरप्राग्भाराः । अबोभवुश्च दक्षैरप्यलक्ष्या विशिष्य मोक्षपुराध्वानः । एवंच सति प्रशस्तशास्त्रप्रदीपा एव प्रगल्भायंते प्रदीप्रा जगति दुर्गापवर्गमार्गोपदर्शकतया । किंच । बाह्यांधकारनिकुरंबमात्रोपसंहारकारिणः सहस्रकिरणादप्यतिरिच्यते ह्येष निर्विकोप्यवाहीकांतरतिमिरनिकरापहारकारी शास्त्रविसरः । तथा परिदृष्टपुष्टालोकादिविशिष्टपरिस्थूराविदूरार्थसार्थावगमनालंकर्मीणे लोचने अप्यवगण-

॥ २ ॥

यत्येतदतीन्द्रियेतरवस्तुव्यतिकरप्रबोधप्रत्यलं शास्त्रमंरुद्धं । किंच । महाचित्रनिधिरयं शास्त्रकोशो विधिवत्प्रदीयमानोऽपि यो विपक्षाद्यैर्दक्षिणशिष्येभ्यो न कदापि क्षयितां शक्यते, परं सुरक्षितव्य एव खट्वमर्यादप्रमादादिदस्युभ्यः । तस्मान्निरंतरं प्रमादपरिहारेण तदवबोधप्रसाधनावधानानुसंधानविधानैर्जाण्यं विबुधधुरीणैः । तैर्विना अपहेयोपादेयोपेक्षणीयवस्तुनिकरव्यतिकरे तत्तत्तदर्कोपलंजकतया, तथा २ विवेचनैकविकलत्वेनाक्षय्यमोक्षसौख्यादेः प्रापकत्वेन स्वहितस्य सम्यग्ज्ञानक्रियादेः प्रमापयितुमशक्यत्वात् । नच तान्यप्रयत्नोपलभ्यानि, तत्तत्प्रसाधनप्रधानसाधनसन्निधानविधानं विना तदध्ययनसाध्यस्यासिद्धेः । तत्साधनानि च विशुद्धबुद्ध्याजोगः १, सद्गुरुसमायोगः २, सद्गुरुविनयप्रयोगः ३, पुस्तकप्राप्तियोगः ४, प्रमत्ततावियोगः ५, सततोपयोगः ६, शुद्ध्यभियोगः ७, देहारोग्य ८, जाग्र्यां ९ दीनि । दुरापाणि चैतानि । यतो जगत्कर्ममर्मवशादधर्माशर्मबाहुल्येऽस्मिन् कलियुगे प्रतिक्षणं प्रहीयमाणप्रधानमेधादिबलत्वेन क्व तावान् प्राचीनमुनीन्द्रपंक्तिशेमुषीविशेषानुयायी विशुद्धबुद्ध्याजोगः । अगण्यपुण्यप्रचयपरिपाकमहिमोपलभ्यः खलु समग्रग्रंथार्थप्रबोधपटिष्ठविशिष्टतरामितहितनिधिश्रीमद्गुरुसमायोगः । तथा विकुत्स्यातुच्छम्लेच्छादिकुनृपतिततिविध्वस्तानेकवलभ्यादितत्तन्महानगरस्थानेकलक्षप्रमाणागमादिसदादर्शोच्छेदेन कौतस्कुतस्तावदज्ञानांधकूपप्रपतत्प्राणिप्रतिहस्तकप्रायप्रशस्तपुस्तकप्राप्तियोगः । तथा तत इतो दृश्यमाननिरुपमानमिथ्याभिमानाविरामाद्युन्मत्तकुनयोपचयप्रधानकुनृपतितत्पत्तिगृहीतोग्रविग्रहाग्रहप्रहेयप्रमादानाभोगरोगाद्यनुमेयाजाग्र्यादिधुर्येऽत्र कलियुगेऽतिदुरापाणि तथाविधस्वास्थ्याप्रमत्ततोपयोगाभियोगारोग्यजाग्र्यादीनि । ततश्चैवं दुरासदान्यप्यासाद्य कथमप्येतानि नाधीयीरन् ये विधिवन्निरवद्या विद्याः, वंचितः खलु

तैरविवुधधुरीणैः स्वात्मैव तदुच्चोच्चश्रेयोन्यः । अधीत्यापि च ये शास्त्राणि सततानवधारणेन वृद्धिविधुरतया विदधीयेरन्
तदनुक्रमाध्यानिजांजि सुशास्त्राणि, ते च समधिकतरं स्वात्मवंचनेन ,वंचनीयतामंगीचेक्रीयंते । त एव हि धन्याः, प्रवु-
द्धजनमनोमान्या, ये विधाय विधिवत् शास्त्राध्ययनं पुनस्तदवधारणादिना प्रतिदिनं विवृद्धिमेव दधति तानि विदध्युः ।
तद्विवृद्धिश्च प्रायः पटुतरतदभ्यासव्यासप्रयाससाध्या, सोऽपि प्रायस्तद्विषयोत्साहपूर्वं इति प्राहुः प्रवुद्धाः । एषोऽपि गुणि-
जनप्रष्ठैः श्रेष्ठगोष्ठीविधानदधद्रूढिमानमुपलभ्यते । अतो वहुगुणत्वादेषापि ज्ञानादिगुणप्रकर्षप्रापकतया परंपरया साध-
नमेव जेगीयते श्रेयोमार्गस्य । तेन यथासमयमेतामप्यादरिदारिपुविंदुराः श्रीसर्वज्ञोपज्ञसज्ज्ञानोत्साहादिगुणोपचयहेतु-
मिति । यत उच्यते "ज्ञानोत्साहो गुणावाप्तिः प्रागल्भ्यं वहुदर्शिता । तत्त्ववोधः श्रुतावाप्तिः साधुगोष्ठीगुणा ह्यमी । १० ।
किंच । इयमेव स्वमधुरिमविधुरितोर्ध्वाधोलोकाधारसुधाभिमाना वसुंधरावलये विचरद्विवुधततितुष्टये प्रभवति । अतः पापी-
यध्वं क्षणं । दक्षिणाऽक्षुण्णक्षणप्रायं सममस्माभिरचतुरवचनप्रपंचश्रवणोद्भूतप्रभूततापापहारप्रवणं त्रैवैद्यगोष्ठीपीयूषयूषपूरं ।

अथ केचिदहंकारमपीशितिमानमात्मन्यादधतो न दरीधर्ति तथाविधोज्वलगुणानुरागं । ते चैवमखर्वगर्वाध्मातमानसा
न तामर्हतीति तान् प्रत्युपदेशलेशः प्रपंच्यते । तथाहि । तथाविधमवसरमुपलभ्य विद्वन् कथंकारं भवद्हृदयगुहा-
यामुद्यच्छास्त्रखरकरनिकरप्रचारेऽपि क्वचित्तत्तद्वचनान्यथानुपपत्त्यनुमेयापदेयाहंकारांधकारप्रचारः । विमरीमृश्यतामचिरस्य
मोहस्य घास्मं । किं युज्यते भवादृशामपि प्रेक्षादृशां हृदयेष्वंतरुद्यच्छास्त्रप्रकरध्वांताराते: किंचिद्वस्तुतत्त्वानवबोधावरणमनु-
मापयदहंकारशार्वरं । किंच अंतर्ज्वलद्विनयनयविज्ञानादिगुणतृणभरोद्भूतप्रभूतजाड्यज्वलनमनुमेमीयंते तदन्यथानुपपन्नायाः

मर्न्दर्पोद्दामधूमस्फीततया दर्शनेन प्रबुद्धाः । आः किमिदं हतविधेर्विततलसितमिदं, यद्विवेकिनराणामपि बुद्धितरुष्वेवं गर्वगुर्वविवेकातिरेकोदकप्रकरनिषेकः । पुरापि के के ह्येकेनाप्यनेकाविवेकोत्पादकेनानेन छेका अपि नैकलोकनिकायाः कानि २ नाचरिकारयिषताऽकृत्यानि, कृत्यानि वा कानि २ न व्यसरिस्मारयिषत् समयेनानेन, विस्मयस्फीतताधायिस्फुरच्चरस्मृतिनदीलोरपि, तयूनं निधेरेवेदमवंध्येच्छाप्रागल्भ्यं परिपोस्फुरीति, तेषु २ पदार्थेषु उपपनीपद्यमानानामनुपपनीपद्यमानानां वा तत्तद्गुणागुणानां तथा २ नियोजने वियोजने वा प्रत्यलं, यन्नवादृशेषु विमलविद्याजलप्रधौतावदातहृदयेष्वप्येवमहंकारमयीकृत्रिमात्रलिसता । तथाचावावादीत् श्रीहर्षः कविमचर्चिका । अवश्यभव्येष्वनवग्रहग्रहा यया दिशा धावति वेधसः स्पृहा । तृणेन वात्येव तयानुगम्यते जनस्य चित्तेन भृशावशात्मना ॥१॥ अथवा कोऽयं विधिर्नाम । का वा तस्येच्छा, किंवा तया सेत्स्येत । पुरुष एव हि अनवगतत्रयीतत्त्वतया स्वस्वरूपविवेचनादिविकलः सत्कृत्येषु गजनिमीलिकाद्यवलंबी प्रमादानाभोगादिकुमित्रसंपर्कवशादवितर्क्यैवोदर्कं तत्तदसत्क्रियाप्रवृत्तस्तत्तद्दुःखफलोपभोगभाजनं बोभूयेत । स एव च यदा श्रीसर्वज्ञोपज्ञप्रशस्तशास्त्रोपदेशप्रदीपप्रदीपोपलब्धसमस्तवस्तुसतत्त्वतया सम्यग् विविच्य तद्गुणागुणस्वरूपं तदुपादानहानयोः प्रयतत्येत, तदा समासादयत्येवायमुत्तरोत्तरतत्प्रभुजफलभरभ्राजिष्णुः क्रमात्परमपदसंपदमपि ॥ यदुच्यते । तावत्कलयति पुरुषो हतविधिलसितोत्थदुःखसंघातं । चिंतयति नेति यावत्कोऽहं किं मे हितं चान्यत् ।१। इति च विविच्य विबुध्य च हिताहितप्राप्तिहानियत्नवतः । सा नास्ति कापि संपत् लुठति न या करतले तस्य ।२। अतः परिज्ञातज्ञेयगुणागुणगरिमाणो विचारचारिमाखंडपंडितिमानश्च विचारयंतां स्वचेतसा, किं चतुराणां चेतश्चमत्कारकारी स्यात् कदापि चेक्रीयमाणो-

ऽयमवलेपः । किंच । इह हि दुरंते कलिकालविलासे विस्फुरत्प्रबलमोहनृपालकुतूहलोत्तालवलोच्छलत्कोलाहलोच्चालिताखिलमंजुलोल्लासिवहुलगुणचक्रवालाकलितविन्नासे कुतस्त्यं तावन्निरवद्यहृद्यचातुर्वैद्यवैशारद्यं । नहि कोऽप्येवंविधः पुरुषविशेषोऽत्र समीक्ष्यते, यः किल कलयत्यविकलं सार्ववैद्यावबोधविशदिमानं । यतो गलंत्येव हि प्रतिकलमधुनातनेषु तमोजनेषु सच्छिद्राजनोदरपूरिपूर इव शुश्रूषाश्रवणग्रहणधारणोहापोहार्थविज्ञानतर्कविज्ञानतत्त्वज्ञानलक्षणा अमी मनीषागुणाः । गलत्सु च तेषु तदग्रिमनिदानानि विधौ प्रधानानि विद्यानिधानान्यपि परीस्पृशत्येव हि क्रमेणापहानिपदवीं । एवंच क्रमेण हीयमाने विद्यासौंदर्ये साम्प्रतकालीनेषु जनेषु ज्ञानलवा एव परिपोस्फुरति । तथापि योऽचतुरचेतस्को विद्याग्रातमात्रतयैवाऽमानाहंकृतिव्राजनमानुषंगरंगढंगसंसर्गी संजायते, नार्हत्येवायमप्रतिमप्रामाणिकश्रोत्रियपरिषदि प्रवेशं । भवत्ते च स खल्वदृष्टाश्रुतस्वीयज्ञानाणुताप्रदायिपुरातनानेकमौनींद्रवृंदोदारचित्रचरित्रः कूपमंडूक इव बहुश्रुतसदस्सु हास्यास्पदत्वमिति । ततो विचक्षण समीक्षस्व क्षणमांतरचक्षुषा, कस्ते नाज्ञानातिशयो, येनैवं दुर्धरदर्पोद्धुरकंधरीभवसि। धीमन् नयस्व क्षणमेकं स्वीयमानसं स्थिरस्थेमानं । अवधारय वैबुध्यधुराधरणधीरोदारपुरातनानेकमुनींद्रचंद्रोदग्रविद्याशक्त्यादिसौंदर्यं ॥ तथाहि इह हि अहमहमिकाऽवनम्रकम्रनिःशेषवृंदारकासुरनिकरेश्वराखिलविपुलावलयप्रौढपरिवृढश्रेणिशीर्षावलीशेखरासंगिरत्नोत्करोल्लासिरश्मिमंडलीमिलदविरलपदयुगलनखोन्मिषत्सिंदूरपूरारुणरुचिरोचिर्निकरकर्बुरितांबरोदरश्रीमज्जिनपतिगदितोत्पादव्ययध्रौव्याद्यनंतधर्मात्मकाशेषजगद्व्यवस्थाप्रकाशकामलपदत्रयीसमाकर्णनानंतराविर्भवत्प्रतिभाप्राग्भारप्रकर्षप्रबुद्धाशेषभुवनांतर्वर्तिपदार्थसार्थोपनिषद्याथातथ्यगणधरपदवीप्राप्तप्रतिष्ठश्रीमद्गौतमप्रभृतिगणपतयोंऽतमुहूर्त्तमात्रकालेन चराचरोद-

रविचरन्मोहांधकारसंजारसंहारोद्यत्तरुणतरणिकरनिकरानुकारिभिः शेषज्ञेयोपनिषत्परिज्ञाननिधानप्रधानतरानंतार्थाऽद्व्य-कोशात्मद्वादशांगीयशःसंजसमुत्तंजनं विरचयांचक्रुः, तेष्वेव व्यद्यासीद्विश्वत्रयानुत्तरावबोधसंपत् । तदनु पुनरखर्वविततरतमभावप्रज्ञाविजवाद्वृयोऽप्यभूवन्नित्यादिप्रज्ञाप्रकर्षप्रतिहताशेषबुधंमन्यविद्याखर्वगर्वसर्वस्वाः सद्दक्षुभिक्षुक्षितिपतयो यतिपतयः । ये हि किलैकपदश्रवणतोऽप्यविकलं कलयांचक्रुर्ग्रंथकोटीकोटीरपि । कः खलु परिमितजीवितैकजिह्वो निजशेमुषीसमुन्मेषैः सुरगुरूयमाणोऽपि कोष्ठकबुद्धिबीजबुद्ध्याद्यनेकप्रकारप्राचीनप्राज्ञप्रज्ञामहिमानं प्रथयितुमलं । तथा चतुरस्त्वेतश्चमत्कृतये केषांचिदुच्यते । तथाहि ।

पिप्रेसिवान् चिरमनिनारप्रचारोद्यद्वादिदर्पांधकारसंहारदिवाकरकरनिकरप्रतिमवाग्विलासः श्रीसिद्धसेनदिवाकरो नाम सूरिवरः । यस्य किल समारूढस्य प्रौढवादरणांगणे प्रज्ञैश्वर्यादिगुणसदःसदःपतिप्रतिज्ञाधारणाबाहुश्रुत्यक्षांतिमाध्यस्थ्यादिवत्तगुणग्रामरमणीयानेकसभ्यावलीसमक्षमक्षोदीयोऽक्षुण्णक्षोदक्षमानल्पविकल्पकल्पिताकल्पजल्पकेलीकलामाकलय्य मषीनिलिप्तवदना इव प्रत्यग्रपराजयाविर्भावप्रभवत्विषादासादनोदितश्यामलिमानः पंचाननरावसंश्रवणादिव जलधरधोरणीधौतांजनगिरिगरीयःसोदरो द्धुरसिंधुरपरंपरेव तत्रसुः सर्वतोऽपि प्रचंडपांडित्यपाटवाखर्वगर्वाग्रिमडंबा (वरा) अपि प्रतिवादिसंदोहाः । यः किल जगत्यान् स्वीयौन्नत्यप्रकर्षामरगिरिगरीयःशृंगप्रस्पर्द्धिश्रद्धिजिनालयश्रेणिशिखरशिरोऽसंस्थितात्रकिंकिणीजालनिक्वणव्यतिकरवाचालिताऽखिलदिक्चक्रवालप्रचलत्तुंगरलोद्यद्विपुलपताकावलीसंकरोच्छिन्नखरकरनिकरप्रचाराविर्भवत्तापसंजारायामुज्जयिनीमहानगर्यामपहृतहरगिरिगुरुशैखरौन्नत्यमदगरिमोन्मादे महाकालाभिधप्रासादे श्रीमद्देवाधि-

देवानुपमस्तुतिविरचनवशात् प्रस्फुटचंरुचंरुशालिंगोल्लखंमांतराविर्नूतायां श्रीमज्जिनपतिप्रतिमायां चमच्चेक्रीयमाणचित्ताऽक्रमाक्रांतदिक्चक्रविक्रमोज्ञासितश्रीविक्रमादित्यनूपतिप्रभृतिप्रवीणततिविततसदसः श्रीमद्देवाधिदेवानणुगुणप्रख्यापनपूर्वं तत्त्वत्रयीप्रबोधप्रदानेन प्रजावयांचकृवान् श्रीमज्जिनशासनं, सुरगुरुरप्यचतुर एवैतस्य गम्भीरतरार्थानंदिसकलताकिंकचक्रचूडामणिपरिपत्संमत्याद्यप्रमग्रंथरत्नोत्करप्ररोहरोहणगिरेरित्यादिविशदावदातविवर्णने ॥

तथा पवित्रयांबभूव क्षितिवलयं सूरिवरः श्रीमल्लवादी नाम महावादी । यस्य भगवतोऽनतिशैशववयसोऽपि क्षपिताशेषविपक्षक्षितिभृच्छिलादित्याभिधप्रौढप्रतापशालिमेदिनीवासवोदारसंसदि प्रकृते षण्मासावधिवादमहासंगरे निर्जितदुर्जयोर्जस्विप्रतिभाप्राग्भारालयाखिलसौगतावलीपुष्टगरिष्ठयशःप्रकराविर्भूतायशोंगारगणप्रसंगसादितप्रवरस्थिरतरतागुणो यशोभरघनसारः सुरभयामासिवान् त्रिभुवनभवनोदरं । अद्यापि हि यत्प्रभवं नयचक्राख्यग्रंथचक्रं समुच्छिनत्ति प्रसरद्दुर्वादिदर्प्पचक्रं ॥

तथा उपचक्रे भगवान् अपारसंसारपारावारपरिमज्जज्जंतुजातमविकलकरालकलिकालविलासेऽपि त्रिभुवनभर्तृश्रीमज्जिनपतिगदितानवद्यनिःश्रेयसाध्वप्रदर्शनेन कृतत्रिभुवनभद्रो हरिभद्रो नाम सूरीन्द्रः । यतः क्ष्माधरगुरोः प्राप्तप्रभवा सललितबहुलविमलाबालनिष्प्रतिमोदारान्यर्थसदर्थसार्थाक्षुण्णाक्षरनिकरनीरपूरनिरंतरा, क्वचिद्विरचितातुच्छमात्सर्यालयाशेषपरप्रवादिप्रभवानेककर्कशतर्कसंपर्कप्रतिघातार्थोपस्थापितनिष्प्रतिमोत्तमोत्तमयुक्तिव्यतिकररत्नोत्करकरंबितांतरा, क्वचिद्दुर्दंडदंडककदंबकप्रोल्लसद्धवलाऽमललोलकल्लोलमालोत्पतत्सीकरप्रकरासारव्ययितत्रिभुवनजनसंतापा, क्वचित्कवलितासारपरप्रवा-

दिग्ग्रथितागण्यानुमानमीनावलीकदुःशकव्यभिचारप्रचारा, असंख्येयाऽध्यक्षमुल्याक्षुण्णक्षोदक्षमाप्रौढप्रमाणप्रकरप्रसर्पत्तिमिंगिलगिलावलीसंकुलांतराला, क्वचिन्निरवद्योदारहृद्यपद्यावलीधवलविलसन्मरालमंडलीसमाकुलविपुलपुलिनाभोगभोगा, क्वचिदतिगूढप्रौढप्रचुरगभीरार्थसार्थस्वल्पाक्षरानल्पगद्यपद्यावलीविकटपुटभेदपेटकोद्घाटिताकालवालावलीसाध्वसव्यूहा, क्वचिदमृतरसनिस्यंदिश्रवणसुखदानेकप्रथितगाथागणागाधगूढप्रौढहृदसंदोहदुःशकापाठीनाधीवरप्रवेशा, आनंदितसकलसहृदयहृदया, संक्षालिताखिलसंश्रितासंख्यविपश्चित्कल्मषविलया, चतुर्दशप्रकरणशतीनिर्झरिणी पवित्रयांचक्रुषी निखिलभूवलयं, येन किलोद्दामवादमहारणांगणे क्षणमात्रादेव प्रतिहतवितताभिमाना धिक्कारकारितत्तत्संन्यादिवाकोटिलकुटतटाघातशून्यीभूतहृदया योद्धा अपि माध्यमिकाः सन्तोऽपि सरलतरतालहिंजलज्वलनसलिलजलधिद्विकलमलावलीरंगत्तुंगतुरंगभृंगकुरंगागारगिरिकांतारहारविहारोदारप्राकारपुरप्रमुखानेकपदार्थसार्थानपश्यंतः शून्यवादित्वमेवोररीचक्रिरे ॥ तथा प्रसर्पद्दर्पसंभारोद्धुरकंधरा अपि प्रारब्धे येन सहोदारवादसंगरे क्षणमात्रादेव समीक्ष्य स्वीयाखर्वगर्वसर्वस्वह्रासं क्षणिकत्वमेवाशेषसंस्काराणां सूत्रयामासुः सौत्रांतिकाः। यस्य हि परमकोटिप्राप्तोदारज्ञानरमया आसादिताखिलभूमंडलाखंडलमंडलीमहनीयमहिमानं समीक्ष्य विज्ञानस्यैव सारत्वं मन्यमाना अखिलत्रिभुवनवलयस्यापि तन्मयत्वमेव शरणीचक्रुर्योगाचाराः। इह हि षड्दर्शनाशेषवादि(त्व)संदोहा यदभिधानश्रवणादपि माद्यन्मदझरनिर्झरिणीप्ररोहोत्तुंगशृंगधराधरानुकारिस्फुरद्गंधसिंधुरोद्धुरगंधप्रकरविधुरितापरसिंधुरधोरणीव विमुक्ताशेषमदोत्कर्ष्या• निर्व्याजोल्लसद्भक्तियुक्तीः प्रकटयंतः प्रकटमेव यन्निकटमाटाटियुः क्रमयुगलवरीवस्याघटनायै ॥

तथा प्रीणयामासिवानमृतरसनिस्यंदिवाग्विलासै स्वजगतीं निजप्रतिज्ञावैजवाज्जितदेवसूरिर्देवसूरिर्नाम सूरिः । यस्य किलाशेषवादीन्द्रशिरःशेखरस्य पृथिवीप्राप्तप्रतिष्ठश्रीसिद्धचक्रवर्त्तिश्रीजयसिंहदेवोदारपरिषदि संक्रुसोद्दामचतुरशीतिवादप्रतिवादिनिर्जयनोर्जिताखंडपांडित्यरंजिताखिलजूपालचक्रवालप्रदत्तोत्तालमरालमंडलोज्वलचपलचारुचामरश्रेणिधवलविपुलातपत्रसिंहासनावलीचंगरंगत्तुंगतुरंगकिंकरप्रकरप्रजृतिपरिच्छदापूर्णनिकटतटोत्कटाहंकारसंजारजारितातंञ्कुमुदचंद्राजिधानाखिलव्योमांबराखंरूलविजयार्जितप्रौढसत्कीर्तिनर्त्तकी जगत्रयोत्तुंगवंशाग्रनर्त्तनशीला कुरुतेऽद्यापि सकलसहृदयान् (आनन्दसमास्कन्दास्कन्दान्) । यन्निर्म्मितानेकयुक्तिव्यतिकरांचितोद्दंडदंडकरफारवृत्तोत्कराप्रलरत्नाकरस्याद्वादरत्नाकरप्रमुखानेकसत्तर्कग्रंथावली कां कां न चमत्करीकरीति कोविदावलीं ॥

तथा उद्योतयामास श्रीमज्जिनशासनं दुःखमांधकारसंजारसंहारोद्यत्तरुणतरतरणिकरनिकरानुकारिप्रवरवाक्प्रचारः कोविदवृंदवर्यः श्रीहेमचंद्राचार्यः । यस्याविरलविमलवाग्लहरीनाशितानाद्किालालीनदुर्निवारविस्फुरन्मोहाहिविषप्रसरः श्रीमद्गुर्जरधराधुराधरणधुरंधरतामादधानः श्रीमत्कुमारपालजूपालः समुद्घोषयांमासिवान्निखिलजुवनवलयेऽपि समस्तजगज्जंतुव्रातरक्षोद्घोषणेन विलसद्यशःपटहं । यस्य किल कलिकालसर्वज्ञेतिविरुदानंदितसज्जनमनसः सपादलक्षलक्षणच्छंदोऽनुशासनालंकारचूडामणित्रिषष्टिशलाकापुरुषचरित्रयोगशास्त्रप्रमाणमीमांसाप्रमुखानेकसत्तर्कग्रंथग्रथनानुकंपिताशेषविशेषविशेषज्ञस्य वैदुष्यविशेषव्यावर्णने किं ब्रूमः समधिकं मूढतारूढचेतोवृत्तयो, निखिलत्रैलोक्यवंदनीयपादारविंदयुगला जगवती शारदापि न देध्रीयते सामर्थ्यं ॥

कोविदोत्तंसा बहवोऽप्यभूवन् विविधज्ञानादिगुणगुरवः श्रीमद्गुरवः । न खल्वेतेषां गुणपारावारपरपारं प्राप्नुयाद्वर्षसहस्रैरपि कश्चित्परं नैकोऽप्येतेषु कश्चिदहंकाराद्यनघगुणकालुष्यकलुषितमात्मानं बभार । हंत तर्ह्येतदपेक्षया कः खलु ज्ञानातिशयः सांप्रतकालीनानां जनानां ॥ किंच । एतन्निष्टंकितमिह जानीहि । यत्राहंकारांधकारप्रचारो, न तत्र निर्म्मलज्ञानदिनकरकरप्रचारः, विद्याहंकारयोः सहानवस्थानस्वभावविरोधविधुरत्वात् । एकतरसंभवे इतराभावस्य स्पष्टनिष्टंकनात् । कुत्रचिदहंकाराभावेपि विद्याविरहदर्शनेन नात्र व्यभिचारचौरप्रचारः शंकनीयः । तत्र तदुत्पादकाध्ययनादिसमग्रकारणाभावहेतुकोदारविद्यानुपलंभेपि तद्योग्यताया विद्यमानत्वात् । नच वयं निरहंकारत्वमेव सर्वथा विद्याहेतुं ब्रूमः, तदन्येषामप्यध्ययनादितद्धेतूनां विद्यमानत्वात् । नच विद्यारूपस्वकार्योत्पादनासमर्थत्वात्तस्य तद्योग्यताया अप्यभाव, इति वाच्यं । तदन्यकारणाभावनिमित्तकत्वात्तदनुत्पादनस्य । नच. मुख्यहेतुसंभवेऽप्यपरहेत्वनपेक्षं कार्योत्पादः संभवति, तेषां तदनिदानप्रसक्तेः । यो यदभावेपि भवति, न तत्तस्यकारणं । घटस्येव तंतवः । तन्नैवं तत्र तद्योग्यताभावः साधयितुं शक्यः । नचैवं साहंकारस्यापि तद्योग्यता भवतीति चिंत्यं, तस्य कदापि तददर्शनात् । अथाचक्षीथाः प्रत्यक्षमृषावादित्वमेतत् । यदहंकारिपुरप्रातानां संतमपि विद्याप्राग्भारमपह्नुध्वे । दृश्यंते हि बहवोपि सुधियोऽप्रमाणोन्नताहंकारशिखरिशिखरमारूढचेतसोऽपि विद्यावैशारद्यापहृतसहृदयहृदयाः इति । तदेतदज्ञानमदिरापानविह्वलचेतसां प्रलपितं । तत्पुरुषाणां चातुर्वेदस्य विद्यात्वायोगात्, तदयोगश्च तत्फलविरहात्, विद्या हि ज्ञानमुच्यते, तस्य चानंतरफलं कुमार्गविरत्यादि, सन्मार्गसेवनादि च। तथाचोक्तं ॥ ज्ञानस्य फलं विरतिरित्यादि। तथा"तज्ज्ञानमेव न भवति यस्मिन्नुदिते विभाति रागगणः ।

त्रैविध- ॥ १ ॥

तमसो हि कुतः शक्तिर्दिनकरकिरणाग्रतः स्थातुमित्यादि । अहंकारस्य रागादिविनाभावित्वात्तत्वतस्तद्भेदाचेति । नचाहंकारः सन्मार्गस्तस्य भवहेतुत्वात्, शिष्टनिंदितत्वाच्च, आखेटकादिवत्, इति सिद्धं यत्राहंकारघोरांधकारप्रचारो, न तत्र ज्ञानदिनकरकरविहार इति दर्पापाकरणं ॥

अतः परित्याज्योऽयं सर्वथा प्रशस्यश्रेयोमार्गाराधनप्रधानसाधनानवद्यविद्याविशारदैभिः साभिलापिभिरवलेपाक्षेपः । विधेयोऽनवरतमप्रतिमगुणानुरागसंगः, उपार्जनीयाश्च सम्यग्ज्ञानविनयनयविवेकादिगुणनिकराः । यतो गुणा एव दुष्प्रापाः प्रबलकलिकालविलासानुभावस्फुरद्दोषजालबहुलेऽत्र क्षितितले, गुणवानेव च त्रिविष्टपेपि विशिष्टजनेषु स्पष्टप्रतिष्ठास्पदं जंजन्यमानः समीक्ष्यते दक्षैः । यतो गुणाः सर्वत्र पूज्यंते । तथा गुणवंतमेव हि वरीवृणीयुरहमहमिकया निरस्तापदस्तत्तसकलसंपदः, ऋद्धिसमिद्धा अपि दुर्लभतरगुणवच्चरणपरिचर्यालालसमानसाः सर्वतस्तदभ्यासदेशालंकरणं बोभूयेरन् । अप्रार्थिता अपिच तद्गुणप्रकरप्रेक्षणप्रहृष्टमानसा निर्व्याजभक्तिभावितांतःकरणतया गुणभृत्पदयुगलं स्वमौलौ मौलिलीलामवलंबयेयुः । स्वभावादेव च प्रथयंति कविप्रकांडगंधवाहा दिक्षु विदिक्षु च गुणवद्भूरीयोयशःकर्पूरपूरसौरभप्रथिमानं, यतो नहि विकसत्तरमंभोजन्म अधर्मकर्मकृज्जन्मवद्भवलक्षचक्षुरनध्यक्षलक्ष्म्याः स्वस्मिन्निवासाय प्रार्थनाचाटूनि घटयदुपलभ्यते । किंतु गुणगरिष्ठश्रेष्ठस्थानतया तत्रैव वावसीति सा । नचापि राजद्राजीवराजी रणरणकारकारिमधुकरनिकराकारणाय क्वचनाप्यरियरीति । किंतु स्वयमेव तद्गंधसौरभलोलपास्ते मधुपा गायंत इव तद्गुणनिकरान् झणझणाकारिरावप्रकारैः परिवरीव्रतः सर्वतः तदलंकरणभूयं संप्रतिपनीपद्यंते । अनभ्यर्थिता अपि च स्वस्यैवोद्यद्भोभाविशेषस-

गोष्ठी. ॥ १ ॥

गुन्मेपाय तथैगार्दतया नरविसरोत्तमा अपि निवेशयेरंस्तां निजोत्तमागन्नागे स्वेनैव च वितंतन्यंते तगंधसौरज्जपूरं
सर्वतो दिगुदरविवरेषु गंधवाहाः । तस्माद्गुणानेवेह वंहीयोमहिमप्राग्भाराऽप्रतिहननहेतुतया निरूपयामः खद्धपि ।
किंच । वचनमपि गुणवन्मुखादेव समुत्थितं सम्यगादेयतामादधानमादेव्रीयंते विबुधधुरीणाः । तथाचावादिषुर्विज्ञराः ।
क्षीरं भाजनसंस्थं न तथा वत्सस्य पुष्टिमावहति । आवल्गमानशिरसो यथा हि मातुस्तनात्पिवतः ॥ १ ॥ तद्वत्सुभाषितमयं
क्षीरं दुःशीलभाजनगतं तु । न तथा पुष्टिं जनयति यथा हि गुणवन्मुखात्पतितं ॥ २ ॥ तस्मादनणीयः श्रेयःसाधनप्रगुणगु-
णानुरागादिगुणोपार्जने एवाहितावधानैर्भवितव्यं स्वहितैषिभिर्मनीषिभिः । त एवचार्हति श्रेष्ठ शिष्टगोष्ठीमपि । तेनात्र
अर्हेत्र मयीय सद्गुणानुरागासंगितया यूयमिदानीमिमां । वयमपि च सम्यगुपासितश्रीगुरुचरणसरोजाऽप्रतिमप्रसादाद-
धिकारिण एवात्र । यतो ज्यायोऽढिमजडिमप्रचडिमावष्टब्धचेतस्का अपि श्रीमद्गुरुवदनोद्गच्छद्वचनप्रपंचोद्यद्दिनकरकर-
निकरप्रतिहतातरतम.पटलपटिमतया समवबोधिष्टाक्षोदीयोलक्षणाप्रतिमप्रमाणछंदोऽलंकृत्यादिप्रशस्तशास्त्राणि । यतो
नास्तीह तत्किंचिदवद्यं, महता चरणपरिचर्यापि यत्पाटने न पटु पटिमानं प्रकटयति, घटयत्येवेयं दुर्घटोत्कृष्टविशिष्टश्री-
पदानामपि संटंकं । विघटयत्येव च स्फुटं कटतटानीव घटपेटक विकटतरदुरितकोटीरपि । सामान्यजनेष्वपि किंचिन्नरि-
ष्टपुण्यरत्नविभवशात्तुष्टिपुष्टिमुपगताः श्रीगुरुपादा जायते एव जगज्ज्येष्ठश्रेष्ठसंपत्साधनपटिष्ठाः । यदुक्तं । गुरुयाणं चलणसेवा
न निप्फला होइ कइयावि । ततः सुखेनैव तथाविधधिषणासाधिमविधुरा अपि श्रीमद्गुरुगुरुप्रसादमध्यासीना अध्यगी-
ष्महि, अधीमहे चाद्यापि निशुम्भबुद्धिप्रबोध्यमेध्यशास्त्राणि । तथा तत्तद्वस्तुव्यतिकरेषु तत्त्वातत्त्वविचारणचतुरचेतोवृत्ति-

तामपि प्रतिकलं कलयामः। नहि श्रीमद्गुरुप्रसादकल्पद्रुमप्रभावनैजवस्येयत्ता कापि समस्ति। तथा स्वभावात् श्रीगुरूपदेशाच्च गुणग्लेक्षणप्रहर्षिणोपि वरिवृत्मः। तथाऽविधबुधप्रष्ठप्रेष्ठवरिष्ठगोष्ठीरसिकस्वांततामपिदेधीयामहे। अतो युक्तिमत्येव संप्रत्यावयोरेषा शास्त्रगोष्ठी। ततो विधीयते क्षणं। परं सा किमक्षुणलक्षणानुगामिनी। उत साहित्यसौहित्यानुसारिणी। कर्कशतर्कानुयायिनी वा जवन्भ्यो रोचते। लक्षणानुगामिनी चेत् तदा संप्रति सकलेष्वपि लक्षणेषु श्रीसिद्धहेमचन्द्राभिधानमेव प्रधानतया वावदति तद्विद्वराः अतस्तदाश्रित्य प्रेर्यते किंचित्। वावच्च चोः। अधीये इति त्याद्यतं इङ्क् अध्ययन इति धातुमंतरेणापि कथमपि सिद्ध्येत्॥ सिद्ध्यत्येव चोः धीङ्च अनादरे ह्यस्तन्या। ६ दिवादेः श्ये (सि३-४-७) इति सुस्पष्टमेव। तथा उचन्च् समवाये इत्यनेनोच्यतीति, घ्रा गंधोपादाने इत्यनेन व्याघ्रा इति। तथा। जागर्त्तीति जागृक् निद्राक्षय इत्यनेन। तथा गृत्निगरणे गर्हितार्थे यङि तद्युपि क्त्वे ह्रस्व (सि ४-१-३९) इतिह्रस्वे ऋतोऽत् (सि ४-१-३८) इति ऋकारस्याकारे गह्रोर्जे इति (सि ४-१-४०) गस्य जत्वे आगुणेत्याकारे (आगुणावन्यादेः ४-१-४८) तिवि गुणे चैवमपि सिद्ध्यति इत्यादि त्याद्यंतानि विचित्राण्यपि चित्रकराणि सेत्स्यंते, कियंति वक्तुं शक्यानि। तथा पंच पत् इति व्यवस्थापिते पंच च पट् चेति विग्रहे प्रमाणीति (७३-१२८) डे अंत्यस्वरादिलोपे पंचपानाचष्टे इति णिज् प्रत्यये अंत्यस्वरादे (७-४ ४३) रित्यंत्यस्वरलोपे क्रियार्थत्वा (३-३-३) द्धातुत्वे क्विपि अग्रे हलशब्दे पंचपां हलानीति समासे धुटस्तृतीयः (२-१-७६) इति पो रत्वे ततो हश्चतुर्थ (१-३-३) इति ढत्वे पंचह्लानीति सिद्धिमध्यास्ते। तथा उच्यतां विचार्य क्षणं स्वचेतसा, कस्यधातोः परस्परासंपृक्तानि त्रयोदश रूपाणि सेत्स्यंरन्। वावच्मो

या गिरतेरवपूर्वादनात् ( ३-३-६७ ) इत्यात्मनेपदे ऽद्यतनी ध्वमि सिचि प्रत्यये सिजाशिषोरात्मन ( ४-४-३६ ) इतीङागमे सो धि वेति ( ४-३-७२ ) सिचो लोपेऽडागमे चोपसर्गाकारेण दीर्घत्वे नामिनो गुणो ( ४-३-१ ) वृतो नवेति ( ४-४ ३५ ) पक्षे ऽटो दीर्घत्वे अवागरिध्वं १ अवागरीध्वं २ नवा स्वर ( २-३ १०२ ) इति लत्वे अवागलिध्वं ३ अवागलीध्वं ४ ह्रांतस्थान्नीड्ड्यां वेति ( २-१-८१ ) पक्षे ढत्वे अवागरिढ्वं ५ अवागरीढ्वं ६ अवागलिढ्वं ७ अवागलीढ्वं ८ तथा स्वरग्रहे-त्यादिना ( ३.४-६९ ) ञिटि नामिनोऽकलिहलेरिति ( ४-३-५१ ) वृद्धौ अवागारिढ्वं ९ अवागारिध्वं अवागालिढ्वं ११ अवागालिध्वं १२ इडभावपक्षे च ऋतां क्ङितीरिति(४-४-११६) इरादेशे न्वादेर्नमिन (२-१-६३) इत्यादिनोपांत्यदीर्घत्वे ना-म्यन्तेत्यादिना ढत्वे अवागीर्ढ्वं १३ मिति सुसंगतान्येवेति॥ ७॥ तथा गमिप्रकृतेरंगीकृतिं विनापि जगामेतिरूपं निरूप्यते। तथाहि। जगिस्त्रांदसः जगिमाचष्टे णिजि प्रत्यये नामिनोऽकलिहलेतिवृद्धौ अंत्यस्वरादिलोपे जगयतीति क्विपि तल्लोपे णेरन-टीति ( ४ ३-८३ ) णिज्लोपे जगितिसिद्धं। पुनर्जगिवाचरति कर्तुःक्विपि ( ३-४-२५ ) तस्य लोपे क्रियार्थत्वाद्धातुत्वे पंच-म्यामपि कर्त्तरीति ( ३-४-७१ ) शवि जगामेति रूपं प्रासिध्यत् ॥ ७ ॥ मारिरेकाम इति रेकृङ् शंकायां माङ्पूर्वकः रेक-मानं प्रयुंक्ते णिगि अद्यतनीमप्रत्यये णिश्रीत्यादिना ( ३.४-५८ ) ङे आद्योंऽशेति ( ४-१-२ ) द्वित्वे पूर्वस्य ह्रस्वे णिग्लोपे मव्यस्या (४-२-११३) इत्यकारस्याकारे मारिरेकाम इति सिद्धिमध्यास्ते ॥ ७ ॥ एवं मामिनीमाम इति नवरं अमङमहममी-मृगमूं गताविति धातुः ॥ ७ ॥ इत्यादिमनोविनोदकाः क्रियाप्रयोगा बहवोऽपि बोभवति। तथा मासशब्दात् न्यामि मास-निशेति ( २-१-१०० ) पक्षेऽकारलोपेऽसिद्धं बहिरंग ( ५० न्या ) इत्यकारस्यानित्वेन सोरु ( २-१-७२ ) रित्यभावे धुट-

स्तृतीय इति दत्वे तु न्यायानित्यत्वे माझ्ञामिति मन्यते ज्ञाष्यकृत्। डुर्गस्तु मास्न्यामिति ॥ ७ ॥ दधिसेगिति । ननु यदि गतिकारकङस्युक्ताना विज्ञक्त्युत्पत्तेः प्रागेव समास इति न्यायात् सेगिति पदेन समासस्तदा वृत्त्यंतोऽसप ( १-१-२५ ) इति सस्य पत्वे विधातव्येपि पदत्वाज्ञावात् पदादित्वाज्ञावात् पत्वं प्राप्नोति । सत्यं, तदापि न ज्ञवति विधिव्याख्यानात् यतो नामसिदित्यादिनियमेन ( १-१-२१ ) निवृत्ता पदसंज्ञा, वृत्त्यंतोऽसप इत्यत्र सस्य तु पत्वे पदमेवेतिव्याख्यानात्, विधीयते तर्हि दीर्घवपुप इत्यादौ पत्व, यतः पत्वे कर्त्तव्ये पदत्वं पदान्तत्वाच्च पत्व न स्यात्तत्र, नञा निर्दिष्टस्यानित्यत्वात्। एतदपि कुतो निश्चीयते व्याशी स्सात् ( ७-१-१२०) इत्यत्र द्विःसकारपाठात्, सद्दि नञा निर्दिष्टस्यानित्यत्वात् प्राप्तस्य पत्वस्य निषेधार्थ ॥ ७ ॥ एतच्च व्याकरण क्वचित्प्रचुरतरन्यायविचारैर्डुस्संचरं, इयंच तेषा दिग् । तथाहि नित्यादंतरंगं वलीयः यथा ज्ञाया ज्ञदनो ज्ञौदनः तमिच्छति ( अमव्ययात्क्यन् च ३-४ २३ ) क्यन् ततः सनि अकृतव्यूहत्वात् ज्ञा ज्ञद-नीय स इतिस्थिते द्वित्वं प्राप्नोति औत्वं च, ततो नित्यत्वात् द्वित्वे प्राप्ते तद्बाधित्वाऽतरंगत्वादौत्वं ज्ञवति जुज्ञौदनीयिषतीति ॥ ७ ॥ तदेव लक्षणामृतकल्लोलिनीलहरिमालाप्लवनप्राडुर्ज्ञवच्छीतीज्ञावः प्रौढपुण्योपचयलज्य एवेति यतितव्यं तदाप्तये विवुधधुरीणैः ॥ ७ ॥ अतुच्छस्वच्छमते यदि कविकुलछंदाज्ञिरुपच्छदःपरिज्ञाने ज्ञवतः कौतुकं, तदा शृणु । समार्द्धसमविषमपादादिप्रकारैः प्रीणितविपश्चिन्मनासि वहुधा छंदासि तत्र नानाविधा जातयो वहुप्रकारा दंरुकाः । मात्राछंदसि मागध्या सप्तषष्टिः कोट्यः षष्टिलक्षाधिका ज्ञेदाः । उपहासिन्या चत्वार्यब्जानि षट्पंचाशत्कोट्यः सप्तनवतिर्लक्षाः षष्टिः सहस्राणि । आर्याया पुनरष्टौ कोटयः एकोनत्रिंशल्लक्षा. विंशतिः सहस्राणि विधानानि । एतज्ञताः प्रस्तारादयः षट् प्रत्ययाः

इत्यादि छंदोऽनुशासनं निस्तुषप्रतिभाप्राग्भारभ्राजिष्णूनामेव सम्यगवगतं ॥ ७ ॥ अथ कदाचित्साहित्यसुधारसास्वादे किंचित्सतृष्णं मनस्तदा सकर्णः समाकर्णय लेशतः तद्गतं स्वरूपं शब्दार्थवैचित्र्यवंधुरं कविकर्म साहित्यसारं ब्रुवते विद्वांसः तत्र शब्दो वाचक औपचारिको व्यंजकश्चेति त्रेधा, मुख्योपचरितव्यंग्यभेदेनार्थस्यापि त्रैविध्यं । शब्दस्य वैचित्र्यं दोषहा-नेन गुणाधानेन भूषणन्यासेन च बोभवीति । दुष्टासंस्कारासमर्थानर्थकपदवाक्यलुप्तध्वस्त विसर्गातिष्टसंबंधवंचितसमाप्त-पुनरारब्धभग्नप्रक्रमक्रमादयो दोषाः । माधुर्यौजःप्रसादाख्या गुणाः । अनुप्रासादीनि भूषणानि । अर्थस्य वैचित्र्यं वस्त्व-लंकाररसभेदात्रेधा । इत्यादिशब्दार्थविचाररत्नसंभारभासुरे साहित्यसागरे कोविदानामेव प्रसरीसरीति बुद्धिवेडा । त था ॥ अत्कः शत्कयुतोऽक्ष्णकर्मकचपः कूचीवराटः क्षुणो निस्राकोजनिमांगगः सहृतकेल्होलश्च होलव्रजं । सैवाङ्यैकप्रतिष्कशो-गतसमासावः समाकंचनो विप्यत्वं भवते क्रमादवकुटा राज्ञा ह्यऽद्दष्टोपपात् ॥ १ राजोत्पले हरिभुजामिह केशवस्य यस्योरसी-कुरदनं च जटाकलापे । शंखांवरोपि पवनादरिनाथसूनुः कांतासवो गतनया विपुलं ददातु ॥ २ ॥ पायाद्वः करणो रणोर-णरणोराणोरणो वारणा दत्ता येन रमारमारमरमारामारमाः सारमाः । विष्णुर्जिष्णुरभीरभीरभरभीराभीरभी सारभी स श्रीभानुदयोदयोदयदयो दायोदयोवेदयोः ॥ ३ ॥ इत्यादिविषम २ तरवृत्तसमस्याचित्रक्रियागुप्तकादीन्यनेकविद्वन्मनोविनो-दकलितकौशलान्यनेकशो भवेयुरिति कियदुच्यते समधिकं, कौतुकमात्रप्रवृत्तेरिति ।

प्रामाणिकचूडामणे अथ षड्दर्शनीकर्कशतर्कशर्करास्वादरसिकचित्तवृत्तिता चेत् तदा शुभोदर्कः खट्वयं तर्काभिलापसं-पर्कः इत्याकर्ण्यतां क्षणं तद्वितर्कोपि । इह मूलभेदापेक्षया षडेव तार्किकाः । बौद्धा नैयायिकाः सांख्या जैना वैशेषिका

जैमनीयाश्चेति । एतेषां च स्वरूपं निरुपमानपरिज्ञानप्रधानैरपि सूरिवरैर्ग्रंथगौरवैरपि न शाशक्यते न्यक्षेण वक्तुं । अनेके चैतेषां तत्तत्तर्कग्रंथसंदर्भेषु स्वस्वव्यक्तवक्तव्यताप्रकारविस्तारा ज्ञवंतस्तु स्वयमेव तान्मतपूर्विण एवेति किमुच्यते ऽधिकं । परमेतेषु श्रीमज्जिनपतिमतमेव विततमवितथतया मतिमतामभिमतं । यत्र रागद्वेषाद्यशेषदोषप्लोषी जिन एव देवः । तथा अजिह्मब्रह्मचर्यादिगुणपरिकरितमूर्त्तयः सुसाधव एव गुरवः । तथा निसर्गतोऽपवर्गसंसर्गहेतुर्दयामूलो धर्मः । तथोत्पादव्ययध्रौव्यात्मकं वस्तु तत्त्वमिति। एवमेव चैतच्चतुष्टयं युक्तियुक्तमुत्पश्यामः। तत्र तावद्देवो जिन एव विचारचारुचेतसि चकास्ति नापरः । एतद्धि देवलक्षणं, यदपारसंसारकांतारोद्रप्रसारिसंसारिसारंगसंघरंगज्ञावप्राणप्रहाणकारिप्रकृष्टकूटकपटकोटिघटनापटीयोमृगयूपमानाशेषरागादिदोषाऽदूषितत्वं । तथा निखिललोकालोकाकलनकुशलामलकेवलालोकसंपदालिंगितत्वं । तथा अनादिज्ञवोपचितप्राणिपरंपरानेकतत्तद्भवभ्रमप्रमुखाशेषदुःखोत्करांकुरपूरप्ररोहप्रतिहततया ( हननयो ) दुर्वारकर्मपटलीपटलविकलत्वं, विगताशेषजन्मजरामरणादिक्लेशविह्वलत्वं । तथा निरवधिनिरपायानिह्मब्रह्मदर्शनानंदवीर्यात्मकत्वं। तथा अखिलत्रिभुवनवलयस्यापि अहमहमिकामहत्त्वमित्यादि । इत्यादिलक्षणलक्षित एव च श्रीमान् जिनः प्रख्यायते संख्यावद्भिः । तथा सर्वप्राणिप्रकरप्रकृष्टप्रमोदप्रदाने प्रवणा श्रीमद्भगवन्मूर्तिरपि चात्र साक्षिणी । तथाहि-अनुमेमीयंते हि मनीषिणा निरंकमृगांकमंरुलोज्ज्वलविपुलकपोलस्थलप्रसर्पद्रश्मिविस्मेरिताखिलमनीषिजनमुखारविंदप्रकृष्टप्रशामामृतरसस्पंदिवदनेंदुसंदर्शनेन। तथाऽनवमप्रशमसुधारसपूरपूरितोत्फुल्लकमलदलमंजुलोन्मीलदचटुललोचनयुगलनिजालनेन च क्रोधादिविकारप्रकारधिक्कारं । तथा बोबुध्यंते प्रबुद्धाः कामिनीकमनीयांगपरिष्वंगप्रसंगविवर्जितोत्संगसमीक्षणेन स्मरतिरस्कारं ।

ज्ञायंते विज्ञाः समस्तशस्त्रादिविकलकोमलसरलभुजयुगलविलोकनेन द्विपद्वेपदोपप्लोपं । निश्चेचीयंते च विपश्चितः समस्तप्रशस्ताप्रशस्तक्रियाकरणपरिहरणचणत्वेन कृतकृत्यादित्वात् (त्वम्)। तथा च प्रोचिवांसः स्तुतिकृद्विद्वांसः। प्रशमरसनिमग्नं दृष्टियुग्मं प्रसन्नं वदनकमलमंकः कामिनीसंगशून्यः। करयुगमपि यत्ते शस्त्रसंबंधवंध्यं तदसि जगति देवो वीतराग त्वमेव ॥ १ ॥ नचैवं हरिहरविरंचिप्रभृतीनामपि मूर्तिषु तच्चिह्नादर्शनात् रागादिरहिततेति 'चिंत्यं, यतो निर्णीयत एव नयज्ञैः केषुचिद्देवेषु प्रसरत्कोपसमुन्मेषोद्भ्रमद्भ्रुकुटितटस्थपुटितोत्कटललाटपट्टावलीटीकनेन प्रकटमेव विकटक्रोधोद्यत्कृपीटयोनिप्लुष्टविशिष्टयशःशरीरत्वं। सुवोध एव च केषुचिद्विलसन्मणीरमणीयांगरमणरसिकतावलोकनेन विस्फारस्मरापस्मारघस्मरः। तथा सुज्ञान एव पुण्यपरिज्ञानैः करालकरवालप्रचंडकुंडलितकोदंडकांडोल्लसज्झषमुद्गरशूलशक्तिप्रमुखाप्रशस्तशस्त्रनिचयांचितकरनिकरावधारणेन विद्वेषोन्मेषः, लक्ष्यते दक्षैः करतलकलितामलजपमालिकासंकलनेन व्यामोहसमूहो विद्यमानः तदुत्तरतरपरमध्येयरूपदेवांतरविशेषश्च। तथाध्यवसीयत एव संज्ञिः पाणितलावलंबिविमलजलकुंडिकाकल्पनेनाशौचशौचनीयत्वादिभिः सर्वसंसारिप्राणिगणेभ्यो निर्विशेष इति। तथाचोक्तं स्त्रीसंगेत्यादि। तत्कथयत भोः कथमेते तथा २ रागादिदोषमथिता अपि देवत्वमर्हंति। एवमपि तद्देवत्वकल्पने विलुप्ता सा समग्राप्याराध्याराधकव्यवस्था। सर्वसंसारिणां रागादिमत्त्वाविशेषात् देवत्वोपपत्तेराराध्यत्वप्रसंगात्। अहो मोहनटनाटनप्रकारः। यतः " सरागोपि हि देवश्चेत् गुरुरब्रह्मचार्यपि। कृपाहीनोऽपि धर्म्मः स्यात्कष्टं नष्टं हहा जगत् १ " ततो युज्यते खलु सारेतरवस्तुव्यतिकरविचारणचणचित्तवृत्तीनां देवतत्त्वे सम्यग्विचारो यतः उक्तं नयज्ञैः। नेत्रैर्निरीक्ष्य विपकंटकसर्प्पकीटान् सम्यक्पथा व्रजति तान् परिहृत्य सर्वान्।

कुज्ञानकुश्रुतिकुदृष्टिकुमार्गदोषान् सम्यग् विचारयतु कोऽत्र परापवादः ॥ १ ॥ यथात्र विचारितं भगवद्भिः पूर्वसूरिभिः सम्यङ्नयमार्गानुगामिभिः ॥ तथाहि । विष्णुः समुद्यतगदायुधरौद्रपाणिः शंभुर्लुलन्नरशिरोस्थिकपालमाली । अत्यंतशांतचरितातिशयस्तु वीरः कं पूजयाम उपशांतमशांतरूपं ॥ १ ॥ दुर्योधनादिकुजनाशकरो बभूव विष्णुर्हरस्त्रिपुरनाशकरः किलासीत् । क्रौंचंगुहोऽपि दृढशक्तिहरं चकार वीरस्तु केवलजगद्धितसर्वकारी ।२। पीड्यो ममैप तु ममैप तु रक्षणीयो वध्यो ममैप तु नचोत्तमनीतिरेपा। निःश्रेयसाभ्युदयसौख्यहितार्थबुद्धेर्वीरस्य संति रिपवो नच वंचनीयाः ॥ ३ ॥ रागादिदोपजनकानि वचांसि विष्णोरुन्मत्तचेष्टितकराणि च यानि शंभोः । निःशेपदोपशमनानि मुनेस्तु सम्यक् वंद्यत्वमर्हति नु को नु विचारयध्वं ॥ ४ ॥ यश्चोद्यतः परवधाय घृणां विधाय (विहाय) त्राणाय यश्च जगतः शरणं प्रवृत्तः । रागी च यो भवति यश्च विमुक्तरागः पूज्यस्तयोः क इह ब्रूत चिर विचिंत्य ।५। रुद्रो रागवशात् स्त्रियं वहति यो हिंस्रो ह्रियावर्जितो विष्णुः क्रूरतरः कृतघ्नचरितः स्कंदः स्वयं ज्ञातिहा । क्रूरार्या महिषांतकृन्नरवसामांसास्थिकामातुरः पानेछुश्च विनायको जिनवरे स्वल्पोऽपि दोषोस्ति कः ॥ ६ ॥ बंधुर्न नः स भगवानरयोपि चान्ये साक्षान्न दृष्टतर एकतमोऽपि चैपां । श्रुत्वा वचः सुचरितं च पृथग्विशेपं वीरं गुणातिशयलोलतयाश्रिताः स्मः ।७। यस्य निखिलाश्च दोपा न संति सर्वे गुणाश्च विद्यंते। ब्रह्मा वा विष्णुर्वा हरो जिनो वा नमस्तस्मै ॥ ८ ॥ इतिलोकतत्त्वनिर्णये श्रीहरिभद्रसूरिपादानां वचांसि । तथान्येप्यूचिवांसः । ईशः किं छिन्नलिंगो यदि विगतभयः शूलपाणिः कथं स्यान्नाथः किं भिक्षचारी यतिरितिच कथं सांगनः सात्मजश्च । आर्द्राजः किन्त्वजन्मा सकलविदिति किं वेत्ति नात्मांतरायं संक्षेपात्सम्यगुक्तं पशुपतिमपशुः कोऽत्र धीमानुपास्ते

॥ ११ ॥

॥ १ ॥ ब्रह्मा धर्माक्षसूत्री सुरयुवतिरसावेशविभ्रांतचेताः शंभुः खट्वांगधारी गिरिपतितनयापांगलीलानुबद्धः । विष्णुश्चक्राधिपः सन् दुहितरमगमद्गोपनाथस्य मोहादर्हन् विध्वस्तरागो जितमरणजयः कोऽयमेष्वाप्तनाथः ।२। इत्यादि ॥ एनमपि च जगवंतमर्हतं केचित् महामोहोपहतमतयोऽनधिगतैतत्रिजुवनानुपममहिमप्राग्जारा मानुपत्वमात्रेणासर्ववेत्तृत्वमुद्भावयंतोऽनाप्ततया प्रतिपनीपेदिवांसः । तथाहि । ते ह्येवमनुमानयंति । ऋपजवर्द्धमानादिर्जिनो न सकलार्थसाक्षात्करणकुशलज्ञानशाली । मनुष्यमात्रत्वादस्मदादिवत् । नचासर्वज्ञोप्याप्ततया स्वीकर्तुमुचितः, सर्वेषामपि तत्प्रसंगात् । तदेते मंदबुद्धयो यत्तदमंदप्रलापिनः कस्य स्युर्न हास्यास्पदं । अन्वयव्यतिरेकासिद्धेर्हेतोर्युगपदसिद्धताद्यशेषदोषदूषितत्वात् । एतदंधाः सर्वेपि पुरुषा, मनुष्यत्वात्, प्रसिद्धपुरुषविशेषवदित्याद्यनुमानवत्पक्षस्य, प्रत्यक्षादिजिर्बाध्यमानत्वात् । एतदुक्तोत्तरेणापि विदुषां सज्जैरेत्यवगणयितव्याः । तथा त्रैलोक्याद्भुताचिंत्यमहिमवत्त्वेन जगवतो मानुषमात्रताया असिद्धेः । तस्य च महिमांजोधेरयं बिंदुरेको व्यावर्ण्यमानः समाकर्ण्यतां समुत्कर्णं सकर्णाः । तथाहि ॥ अनंतमहिमवैजवतो जगवतो ज्ञानत्रयावजासिनः स्वर्गावासप्रवासिनो गर्जावतरणसमय एव तावत्समुपलजते चतुर्दशजुवनाधिपत्यं सूचयंतीव चतुर्दशोदारस्वप्नानि जननी । समुपजाते च जगवज्जन्मनि, प्रसाद्यंते सर्वतस्तत्क्षणादेवोद्योतजरसखानि दिग्मुखानि, नारका अपि च जगवतो लोकोत्तरानंतमाहात्म्यजृंशिमवशादंतर्मुहूर्तकालं कलयेयुरतुलसुखानि । वसुंधरापि च त्रिजुवनजनतोत्कृष्टपुण्यप्रचयोपचितोत्तमपुरुषजन्मप्रहर्षिणी समुच्छ्वसिति चतुरंगुलीं । अथच सर्वथा अचिंत्यत्वेन जगवन्महिम्नो झगिति पीठप्रकंपप्रेरिताप्रतिहतप्राज्यावधिज्ञानावबुद्धजिनजन्मानः ससंभ्रममेव समि-

यूति प्रस्फुरद्बहुलभक्तिप्राग्भारप्रोल्लासितोच्छलल्लोलकल्लोलोल्लासिमानसांभोधयस्तत्तादृग्दिव्यर्द्धिसंपन्ना अपि षट्पंचाशद्दिक्कुमार्यो जिनजन्ममंदिरोदरे, विनयावनतशिरसश्च संस्तुत्यार्हतं तन्मातरं च, विदेधीयंते विधिवत् कृतकृत्यमात्मानं मन्यमाना आयोजनं क्षितितलसंमार्जनगंधोदकप्रवर्षणपुष्पप्रकरप्रवर्षणादिकृत्यैरनुपमानं भगवज्जन्ममहिमानं। तथा सुरेंद्राणामप्यासनानि त्रिभुवनप्रौढप्ररिवृढप्राप्तिप्रभवत्प्रसर्पत्प्रहर्षप्रकर्षाञ्चरीनृततीव तत्कालमेव कलयंति चलत्वं। झटिति प्रकटितोत्कटक्रोधसंघट्टोल्लसद्भ्रूकुटितटस्थपुटितललाटपट्टप्रकटनपूर्वकंप्रयुक्तावधिज्ञानज्ञातत्रिजगत्पतिजन्मानो भगवन्नमस्कृतिस्तुतिविरचनपराश्चतुःषष्टिरपि प्रयतंते सुरेंद्रा अर्हज्जनिमहिमप्रथनाय। अथच भक्तिप्राग्भारभासुरांतःकरणा मिलित्वा समग्रा अपि सुरविसराधिराजा अमरगिरिगरीयःशृंगाग्रासंगिसौवर्णसिंहासनाध्यासिनो वितन्वते भगवतः क्षीरपारावारोदरस्फुरन्नीरपूरपूरितकुंभसंभारैर्जन्माभिषेकमहोत्सवं। तत्रच महाप्रयत्नप्रताडितोद्दंडदुंदुभिप्रचंडढक्कचक्रत्रंबकहुडुक्कादिदिव्यभव्यातोद्यचक्रोद्भवन्मिलत्सकलदिक्चक्रवालोच्छलद्बहुलप्रतिरवोत्तालविपुलनभोमंडलाविलंविप्रबलतरोल्वणावलकोलाहलोत्रस्यत्तरलतरतारचतुर्जलधिजठरांतरस्फुरत्तिमितिमिंगिलाद्यतुच्छमत्स्यपुच्छोच्छालिताखिलजलभरोत्संगरंगत्तुंगतरतरंगभंगपरंपरोत्पतत्सीकरप्रकरैर्धाव्यते ब्रह्मांडभांडमपि। तथा सरभसरसवशनृत्यदमरसुंदरीसुंदरोरसः स्खलीप्रस्फुरत्त्रुट्यत्तारतरहारसंभारदिगुदरविकीर्यमाणविभक्तमुक्ताप्रकारैस्तारकितमिवाभाति नभस्तलमपि इत्यादिभगवज्जनिमहव्यतिकरसमुपजातातिमममहिमवंहिमोद्भावने न प्रभविष्णुर्विष्णुरपि। अथ चानवरतसुरविसरपरिकरितमूर्त्तिरधिगततदवसरो जलधरधाराधोरणीवानपेक्षितविषमोन्नतादिविभागः सुरतरुरिव त्रिजगज्जनसमीहितार्थसार्थप्रथनप्रत्यक्षो वरिवृष्यावर्षं सुवर्णमणिदुकूलाभर

णगजरथाश्वपरिकरपुरजनपदादिजिरपि, तदनु परिहरन् समग्रसंगानुपगंमप्यालिंगेत जगवंतं सकललोकालोकाकलनकुशलाम- लकेवलालोकसंपत्। अथ चाहमहमिकायनघकघमूर्द्धानस्त्रिजुवनविजुत्तकिप्रकटनोत्कंठुलमानसा विरचयंति चराचरोदा- राधारमारैरिव सुरासुरविसरा जगवत्समवसरणं, यन्न शक्यते गुरुतरप्रतिज्ञाजाजिष्णुना सुरगुरुणापि व्यावर्णयितुं । यत्र जगत्रयीत्राणायेव सज्जितस्वर्णरजतमणिमयी वप्रत्रयी। दंध्वनीत्ययमेव त्रिजुवनत्राणधंचुश्चातुर्गतिकजवोद्भवजयजरापहारी जगवान् शरणमाश्रीयतामिति वदन्निव चतुर्दिगागतजनेज्यो जलधरध्वानधिक्कारकारवंधुरोद्धुरध्वनिमादधदुंडुजिः। नर्नत्ति प्रवलमदानलावलांदोलितस्त्रिजुवनदमनोद्दामपटिमैकधामाक्षाममोहद्विपः प्रोज्ञासनोपार्जितोद्यज्जयपताकेव वास्तोष्पतिस- मुत्तंजितो जंजजिरकेतुः। इतस्ततः स्वामिपादारविंदवंदनोद्भूतप्रजूतप्रमोदातिरेकात् विमोमुच्यंते नाकिनिकायाः सिंहना- दान्। मधुरतरारावचालितांवरोदरांतरालं जेगीयंते जगवद्गुणनिकरान् किंनराः। नृत्यंति चाप्रमाणप्रमोदजरजासुराः केचित्सुरविसराः। तत्रच जगवाननवरतं पुरः २ संचार्यमाणस्फुरत्किरणनिकरकर्बुरितांवरोदरोदारचामीकरोज्ज्वलकमलमंजु- लदलेषु पदयुगलविन्यासं विदधत्सर्वतोऽचिंत्यमाहात्म्यवशतः संनमत्सु तरुगणेष्वपि प्रविश्य प्राग्दिशा विलसदशोकतरुतले त्रिदशपरिवृढोपढौकितप्रौढचामीकरोज्ञासिसिंहासनेऽध्यास्ते। शिरसि दरिधरीति चापहृतसकलसितकरमंडलस्फुरद्धवलि- मोज्ज्वलदर्पसंचयं जगवतस्त्रिजुवनपतित्वाववोधकं त्रिदशगणपतिर्विपुलमातपत्रत्रितयं। चालयंति चोजयतोऽपि सुपर्वप- तयो जाह्नवीजलसमुल्लसद्विमलकल्लोलोल्लासिजाजरज्राजितोदारचामरश्रेणीं। इत्याद्यनंतातिशयधाम्नो जगवतो महिम्नः प्रथने सुरगुरुरप्यप्रजुरेवेति किमुच्यतेऽस्मादृशैरिति। एवंच विरचय्य चिरं त्रिजगद्धितोपदेशोपकारं वज्रूवानंतचतुष्टयीस्व-

रूपो विमुक्तदेहस्थितिः, सर्वजन्मजरामरणादिक्लेशविरहितः, प्रागुप्रदर्शितस्वरूपः, सिद्धावस्थासंसर्गजागपि । तस्मान्मात्सर्योत्सारणेन सुनिश्चितपारमार्थिकदेवांतराभावेऽत्र त्रिभुवने श्रीमान् जिन एव सेव्योऽपवर्गाभिलाषिभिरिति ।

तथा गुरवोऽपि सम्यग् ब्रह्मचर्याद्यजिह्मगुणपवित्रपात्रीभूतगात्रा एव हि सम्यक्परिज्ञातश्रेयोमार्गाराधनसावधानाः परस्यापि तत्प्रबोधने प्रवर्त्तने च प्रत्यला यथावदासेव्याः स्वहितमिच्छुभिः । यतो नहि स्वयमविज्ञातश्रेयोमार्गा अप्रवर्त्तमानाश्च तत्र परेषां तत्प्रबोधप्रवृत्तिप्रदाने प्रत्यलतामाकलयंति । स्वस्मिन्नसतः परेषां प्रदातुमशक्यत्वात् । स्वयं दरिद्रो न परमीश्वरीकर्तुमीश्वरः इति न्यायात् । तन्मार्गश्च सर्वविरतिदेशविरतिभेदेन द्विविधः श्रीमद्धर्म्मनिधिः । तत्र सर्वोत्तमगरिमगुणवत्त्वाद्गुरुत्वलक्षणस्य सर्वविरता एव गुरवो गुरुगौरवार्हाः । ते च पंचमहाव्रतधुराधरणधौरेया एव भवेयुस्तेचैवं ज्ञेयाः । ये हि सूक्ष्मेतरादिभेदाशेषसत्त्वसंघातोपघातरक्षैकनिष्ठा एव यतंते सर्वथा मनोवाक्काययोगैः । प्राणांतेऽपि च विश्वविश्वाविश्वासाद्यशेषदोषद्विरेफनालीकं नालीकं वावचति वचनं। कष्टपांतेपि न ये भैक्ष्यमात्रोपजीविनः सर्वप्राणिपीडापवर्जिनस्तत्तद्वितदुर्गतिगतदुःखसंगतिनिदानं नैव शेश्रीयंते ह्यदत्तादानं । नैव रंरस्यंते मनसापि तत्तद्भवभ्रमाद्यशर्मरमाकार्मणे सर्वधर्म्मकर्म्मनिर्मथने रमणीरमणीयांगरमणे । सर्वभयनिधाने संसारानुसंधानलोभप्रधाने सद्बुद्धितिरोधाने निःशेषदोषपोपाधाने तत्तद्दुर्ध्यानविधाने सदा शोकोद्रेकमादधाने सर्वाशर्मदम्म्याधर्म्मकर्मोपचयं विदधत्येवपरिग्रहसन्निधाने (न)मनःप्रणिधानं । एवं च पंचमहाव्रतीधुराधरणधुरंधरा निषेधयंत्येव रजनीभोजनभजनादिसमस्ताश्रवसंतानं । दंदह्यतेऽनवरतं दुस्तपतपःसमुद्दीप्तज्वलनज्वालाभिर्निजदुष्कर्ममर्मतृणसंदोहान् । निरोधयंति च ये साधुयोधाः समितिनिपुणतयामनोवा-

पायकषायाश्रवनिरोधिनः । नाश्लिष्यंति च सदा गुप्तित्रितयावासनिवासिनः क्षितितलसमुच्छलद्बहुलकर्मकश्मलधूली । ततश्चैवं सम्यगवगतस्वरूपशिवपथपथिकाः सुसाधव एवाभ्युपेया गुरवो नापरे । सावद्यकर्मभ्यो विरतिविरहितानामपि गुरुत्वे पशूनामपि गुरुत्वप्रसक्तेर्विशेषाभावात् । किंच यतो यथावत् तत्त्वातत्त्वप्रबोधप्रदानेन परेषां भवावटप्रपातरक्षणादेव गुरवो गुरुगौरवमर्हति । ततश्च तत्तत्प्राणिप्रहाणादिकुधर्मोपदेशानुमेयाज्ञानगदाधितलोचनाः कथं परेषां तत्त्वमार्गोपदर्शनेन दुर्गतिगर्त्तावर्त्तप्रपातरक्षिणः । नह्यंधा अंधैर्निरुध्यंते विधिवदध्वमाध्वप्रवर्त्तनात् । तथा कथं गुरुतरपरिग्रहाद्युपलशिलाभारभारितांगाः स्वयं संसारसागरक्रोडे ब्रुडंतः परेषां तदुत्तारणाय प्रगल्भायंत इति • विमर्शयतां क्षणं गुरुतत्त्वमपि ॥ ॥ तथा श्रीमान् धर्मोपि श्रीमज्जिनवरोपदिष्ट एव प्रतिभाति प्रेक्षाचक्षुषामदूष्यतया • यत्र हि व्यावर्ण्यते, सकलजीवनिकायाभयदानमेव प्रधानं सर्वसत्त्वैकहिताधानं । विरतिरेव प्रशस्यते सर्वदुःखसंयोजनेभ्यः सदा मिथ्यावचनादत्तादानाब्रह्मपरिग्रहरजनिभोजनेभ्यः । धिक्क्रियंते च यत्र प्रयत्नतः क्रोधमानमायालोभकपायाः । अधिक्रियंते च विनयार्जवमार्दवक्षांतिप्रभृतयो गुणाः । आदेङीयंते सकलदुष्कर्ममर्मच्छिदुर परमपदसौधाधिरोहसोपानवीथीप्रायं बहुधा तपः । इत्यादि कः शक्नोत्यस्य श्रीमद्धर्मनरेंद्रस्य यंहीयोभैभवप्रथिमानं प्रथयितुं । साक्षात्कल्पतरुरेवायं त्रिजगज्जनमनःकल्पितानल्पसंपत्संप्रवितरणायाभ्य लनेतालज्वलनज्वालाकरालरिपुकरवालप्रबलमृगराजोत्फणफणिपतिप्रभृतिभ्योपि परित्रायत एवासौ निजभाक्तिकजननिकरं । रक्षत्येवायं सम्यगाराधितो दुस्तरतरजलधिजलपूरापारकातारोदरेऽपि प्रसरतस्तनुमतः । किमुच्यतेऽधिक । शिवपदसुखास्वादफलस्यापि प्रवितरणे पटीयानेवायं । नचैवं परतीर्थिकसार्थसमर्थिता अपि तत्प्रापणप्रवणतया च-

कासंति चतुरचेतस्सु । तत्र षड्जीवतत्त्वावबोधतद्रक्षोपायानपायप्रयत्नाभावात् १। तथा असकलकलयितृपुरुषविशेषप्रणीतत्त्वात् २। निबिडरागद्वेषकामक्रोधलोभाद्यभिभूतैरजितेंद्रियपुरुषविशेषैः परिगृहीतत्वाच्चेतिहेतुत्रयी । नचैषा असिद्धतादिदूषणकणेनापि परीकरितस्वरूपा । यतो न तावल्लौकिकधर्मेषु प्रथमतः षड्जीवपरिज्ञानपूर्वकस्तद्रक्षाप्रयत्नः । तदुपघाताविनाभाविस्नानादिक्रियास्वपि धर्मबुद्ध्या प्रवृत्त्युपलब्धेः । नच तासामपि धर्म्महेतुतेतिचिंत्यं विचारचारिमावदातहृदयैः, जलशैवलाद्येकेंद्रियजंतूनां तदाश्रितत्रसजंतूनां च प्राणापहारकारित्वात् । यदुक्तं उत्तरमीमांसायां "लूतास्यतंतुगलिते ये बिंदौ संति जंतवः । सूक्ष्मा भ्रमरमानास्ते नैव मांति त्रिविष्टपे" ॥ तथा स्कंदपुराणगतनरपुराणे । कुसुंभकुंकुमांभोवन्निचितं सूक्ष्मजंतुभिः । न दृढेनापि वस्त्रेण शक्यं शोधयितुं जलं ।१। सूक्ष्माणि जंतूनि जलाश्रयाणि जलस्य वर्णाकृतिसंश्रितानि । तस्माज्जलं जीवदयानिमित्तं निर्ग्रंथशूराः परिवर्जयंति ।२।" इत्यादि । नच हिंसाक्रियाया अपि धर्म्महेतुता, निरंतरं तन्मात्रोपजीविनां शौनिकधीवरादीनामपि परमतमधार्म्मिकत्वेन विप्रादिभिरपि पूज्यत्वोपपत्तेः । नच तेषामाजीविकाधिया तत्र प्रवृत्तेर्दुर्गातिदौर्गत्याधिगतिनिदानाय सा, परेषां तु परलोकैकहितधर्मार्थितया तत्र प्रवृत्तेर्न्नविष्यति तद्धेतुरितिवाच्यं । परबुद्धिभेदमात्रेण भावानां स्वभावनाशाभावजृंभिकत्वात् । प्राणापहारस्वभावे विषभक्षणे जीवितमरणाशंसिनोर्द्वयोरपि प्रवृत्तौ तुल्यस्यैव फलस्योपदर्शनात् । अथ मन्येथाः । न स्नानादौ प्राणिप्राणोपरमेणाधर्मागता, जलादीनां प्राणित्वेनाऽप्रसिद्धेः । तदाश्रितानां च कतिपयत्रसजंतूनां वधसंभवेपि तत्क्रियोपार्जितोर्जस्विपुण्यप्राग्भारप्रतिहृतत्वेन तद्धोद्भावद्यकणिकायास्तीर्थयात्रादिष्विव तदंगतोपपत्तेरिति । एतदप्यज्ञानांधकारनिकरबाधितदृष्टितावचेष्टितं । अनुमानादिप्रमाणैर्जलादी-

नामपि जीवत्वेन पूर्वसूरिभिः प्रसाधनात्। तथाहि। भौतरिदं जलं सात्मकं। अभ्रादिविकारे स्वतः संभूयपातात्। मत्स्यादिवत्। भौममंभोऽपि सात्मकं। क्षतभूसमानस्य स्वभावस्य संभवात्, दर्दुरादिवत्। तथा वनस्पतिरपि सात्मकः। स्वप्रायोग्याहारेण वृद्धिदर्शनात्, बालादिवत्॥ ॥ तथाप्तप्रणीतागमप्रतिपादितत्वाच्च जलादीनां जीवत्वमवसेयं। नच तेषां संदिग्धाप्रमाणता, रागादिविरहितपुरुषविशेषप्रणीतत्वात्। रागवतो हि मतिरसर्वथेष्टत्वेन, तत्परतंत्रतया च कचिन्मोमोहि। द्वेषभाजश्च कचित् द्वेष्ये वस्तुनि दोभोढि। अतस्ततः संभवति कचिदनृतगिरामभ्युभिरणं। तद्रहितस्य तु किं नाम स्यात्तन्निदानं। यदुक्तं। रागाद्वा द्वेषाद्वा मोहाद्वा वाक्यमुच्यते ह्यनृतं। यस्य तु नैते दोषास्तस्यानृतकारणं किं स्यादिति। नच तत्प्रणेतू रागादिनिवृत्तिरपि संशयदोलावलंबितामाकलयित्री, तदुक्ततत्त्वस्य स्वयथैरपि परतीर्थिकसार्थैरपि व्यर्थयितुमशक्यत्वात्। पूर्वापराव्याहतवचनवादित्वाच्च। तस्मान्न तत्प्रणीतागमस्य प्रामाण्ये संदेग्धि कश्चनापि विदग्धः। तथाचोचियांसो विद्वांसः। “हितोपदेशात्सकलज्ञक्रृप्तेर्मुमुक्षुसत्साधुपरिग्रहाच्च। पूर्वापरार्थेष्वविरोधसिद्धेस्त्वदागमा एव सतां प्रमाणमिति”। नच हरिहरादिभिरासैस्तथानुपदेशनात्संदिग्धमेव जलादेः सात्मकत्वं। तेषां पूर्वप्रदर्शितन्यायेन रागादिमत्त्वेन, प्रदर्शयिष्यमाणयुक्तेश्च सर्वज्ञत्वासिद्धेराप्तत्वाभावात्। अभिधेयं वस्तु यथास्थितं यो जानीते यथाज्ञानं चाभिधत्ते स आप्त इति लक्षणस्याघटमानत्वात्। तथा हरिहरादिभिराप्तैस्तथानुपदेशनमप्यसिद्धं। जले विष्णुरित्यादिना, वेवेष्टि ज्ञानात्मना चराचरोदरमिति विष्णुरितिनिरुक्तेः परमार्थतो जीवत्वस्यैवाभिधानात्। तथा महाभारते आरण्यके पर्वणि पंचमपत्रे। एवं पतति संसारे तासु तास्विह योनिषु। अविद्याकर्मतृष्णाभिर्भ्राम्यमाणोऽथ चक्रवत्॥१॥ ब्रह्मादिषु तृणान्तेषु भूतेषु परिवर्त्तते।

जले भुवि तथाकाशे जायमानः पुनः २ रित्यादिना तृणजलभुवादीनामपि प्राणित्वेन प्रधानत्वाच्च (प्रसाधनाच्च)। तथा। बाधकाभावादपि तेषां तत्त्वमवबोद्धव्यं, तद्बाधकं हि गत्याद्यभावश्चेत्तदा कीलितपुरुषादिना व्यभिचारः। श्वासादिरहितत्वं चेत्तदप्यसन् अस्पष्टस्यातिशयिवेद्यस्य तस्य तेषामभ्युपगतेः। स्पष्टस्य च यूकामत्कुणदंशादीनामप्यदर्शनात्। इत्याद्यनेकशो युक्तिभिः सप्रपंचं प्रपंचितं खल्वेतत्पूर्वसूरिभिरित्यलं विस्तरेणेत्येवं जलादीनां सात्मकतासिद्धेः तत्प्राणिप्राणोपहारकारित्वादवसेया स्नानादिक्रियास्वधर्मांगतेति॥ ॥ यच्चोक्तं तदाश्रितानां कतिपयत्रसजंतूनां वधसंभवेपि तत्क्रियोपार्जितेत्यादि, तत्र विचार्यते किंचित्। ननु तत्र कौतस्कुती पुण्यसंपत्तिरिति वाच्यं। बाह्यदेहमलापगमादिति चेन्न बाह्यदेहमलापगमेप्यांतरमलापगमाभावात् तयोः प्रतिबंधासिद्धेः, परिस्थूलस्य विष्ठादेरप्यंत्रमलानपगमात्सूक्ष्मतरपापमलापगमसंभावनाया अप्ययुक्तत्वात्। किंच जलेन बहिरशुभमलाद्यपनयनाद्यांतरस्याप्यशुभमलस्यापनयनानुमितिरेवं स्रक्चंदनागरुकस्तूरीकर्पूरविलेपनादिशुभद्रव्यस्याप्यपहरणदर्शनादांतरशुभकर्मणोप्यपहरणप्राप्त्यनुमितिरपि दुर्निवारा स्यान्न्यायस्य समानत्वादेवं चानिष्टापत्तिरिति। अथ क्रियात्वादिति चेन्ननु सा किं सामान्यतस्तन्मात्रं विशिष्टा वा काचित्। आद्यविकल्पे त्रिभुवनस्यापि सक्रियत्वात्स्वर्गाद्यावासेष्वेव निवाससंभवात् श्वभ्रादीनां रिक्तताप्रसक्तिः। द्वितीयेतु किंनाम तस्या विशिष्टत्वं, निरवद्यत्वं चेत्तदेतन्महदपत्रपिष्णुताविचेष्टितं। असंख्यसत्त्वोपघातनिर्वर्त्यत्वेनावद्यप्राग्भारस्य तत्रानंतरमेव प्रदर्शितस्याप्यस्मृतेः। आगमप्रतिपादितत्वं त्वनुद्घोष्यमेव, तत्प्रतिपादकागमानां हिंसादिसंसक्तपथोपदेशादिना प्रमाणत्वानुपपत्तेः। यदूचे जिनस्तुतिकृता 'हिंसादिसंसक्तपथोपदेशादसर्वविन्मूलतया प्रवृत्तेः। नृशंसदुर्बुद्धिपरिग्रहाच्च ब्रूमस्त्वदन्यागममप्रमाणमिति"। तथा क्वचि-

न्निपिद्धत्वादपि। तदुक्तं व्यासेन "नोदकक्लिन्नगात्रो हि स्नात इत्यभिधीयते। स स्नातो यो दमस्नातः स बाह्याभ्यंतरः शुचिः १। चित्तमंतर्गतं दुष्टं तीर्थस्नानैर्न शुद्ध्यति । शतशोपि जलैर्धौतं सुराभांडमिवाशुचि ।२। आत्मा नदी संयमतोयतीर्था सत्योदका शीलतटा दयोर्मिः। अत्राभिषेकं कुरु पांडुपुत्र न वारिणा शुद्ध्यति चांतरात्मा।३ अन्यैरपि। मृदो भारसहस्रेण जलकुंभशतेन च। न शुध्यंति दुराचाराः स्नातास्तीर्थशतैरपि। ४। न शरीरमलत्यागान्नरो भवति निर्मलः। मानसैस्तु मलैर्मुक्तो भवत्येव हि निर्मलः।५। जायते च म्रियंते च जलेष्वेव जलौकसः। न.च गच्छंति ते स्वर्गमविशुद्धमनोमलाः।६। तथा। आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च। पार्थिवं मानसं चैव स्नानं सप्तविधं स्मृतं ।७। सप्त स्नानानि प्रोक्तानि स्वयमेव स्वयंभुवा। द्रव्यभावविशुद्ध्यर्थं ऋषीणां ब्रह्मचारिणां ८ इत्यादि"। वपुःकष्टकारित्वं विशिष्टत्वमिति चेत्तदपि न चतुरचित्तचमत्करणचंचु। तस्य हिंसादिक्रियास्वपि समानत्वात्प्रबलप्राणिप्रहाणादाजीवनाशमपि तस्य संभवात्प्राणिवधस्तूभयत्रापि समान एवेति दर्शितं। किंच। नायं नियमो यत्स्नानादौ वपुषः कष्टमेव। शिशिरसमयादौ कदाचिदेव तदुपलंभात्। ग्रीष्मर्तुसमयादौ तु शिरसि तपत्तपनखरकरप्रकरप्रोज्ज्वलप्रचुरतरतापप्रतापितांगस्य लुलत्कल्लोलावलीप्लवमानस्य परमतमशैत्यसुखसंपदेव प्रोल्लासयत इत्यसिद्धं भोः तत्र वपुःकष्टकारित्वमिति यत्किंचिदेतत्। अथ मनःप्रसादजनकत्वं तद्विशिष्टत्वमभिमतमिति चेत्। ननु कोयं मनः प्रसादो नाम। किं सामान्यतः प्रमोदमात्रं, आहोश्विद्विशिष्टः कश्चनापि लयविशेषः। प्राचीनविकल्पे सौनिकादीनां तत्तद्गर्हितक्रियास्वपि प्रमोदः प्रपोस्फुरीत्येवेति तत्रापि तथाप्रसंगः। द्वितीये तु स किं रागद्वेषादिव्याकुलत्वाभावजनितश्चेतसः स्वास्थ्यविशेषः, अनिर्वाच्यो वा कश्चिन्न तावदाद्यः पक्षोऽदुष्टः।

तत्र रागादिव्याकुलत्वाभावासिद्धेः । स्नानं हि गात्रप्रह्लादकत्वेन वपुर्दर्पादिविवर्द्धकतयाऽन्वयव्यतिरेकाभ्यां रागाद्यवष्टंभकमेव निष्टंक्यते लोकैरपि । "स्नानं मददर्पकरं कामांगं प्रथमं स्मृतं । तस्मात्कामं परित्यज्य नैव स्नांति दमेरताः" इत्यादिवचनात् । अन्यथा कथं रागाद्येषिणामपि भोगिनां बहुपरिचयज्ञाततत्स्वरूपत्वेपि प्रवृत्तिस्तत्र । यदैषिणामनुभवादिज्ञाततत्स्वरूपत्वे यत्र प्रवृत्तिस्तस्य तद्धेतुतया व्यवहर्त्तव्यं । यथा नीरोगतैषिणां तत्र प्रवृत्तेरौषधं तथेति कथं तत्र रागाद्यभावजनितं मनःस्वास्थ्यं । तद्धि भगवत्प्रतिमादौ रागादिचिह्नविमुक्ते निरुपमोपशमामृतप्लाविते परिदृश्यमाने पुनः २ स्तद्गुणानुचिंतनेन रागादिविस्मृत्या परमोपशमाद्युदयेन जायमानं युक्तिमत् । यद्गुणं हि प्रायो वस्तु चिंत्यते, तद्गुणं चेतोपि संजायमानमुपलभ्यते, कामिनीरूपादिविकल्पने रागाद्युत्पत्तेर्वीतरागावस्थाध्याने तदपचयस्य चोपलब्धेः । अन्वयव्यतिरेकाभ्यां दर्पादिजननगुणमेव च जलमिति नाद्यः पक्षः क्षेमंकरः । द्वितीयेऽनिर्वाच्योपि रागाद्यभावजन्यश्चेत्कश्चित्तर्ह्यसिद्धता । तत्संपृक्तश्चेत्तदा न तेन किंचिदिति वाङ्मात्रमेतत् मनःप्रसादो विशिष्टत्वमित्यपि । ततो विशिष्टक्रियात्वादित्ययमपिहेतुर्न साधीयान् । अथ जलस्य पवित्रत्वादिति चेन्न । पवित्रापवित्रव्यवहारस्य लौकिकपरिकल्पितत्वात् । भवतु वा । तत्रापि तेन देहस्यैव पावित्र्यं, नांतरात्मनोऽस्य तपोज्ञानादेरेव शुद्धिप्रसिद्धेरन्यथा जगतोपि धार्मिकत्वापत्त्या सैव श्वभ्ररिक्तता । तदूचे मानवे धर्मशास्त्रे भृगुप्रोक्तसंहितायां पंचमाध्याये "सर्वेषामेव शौचानामर्थशौचं परं स्मृतं । योऽर्थे शुचिर्हि स शुचिर्न मृद्वारिशुचिः शुचिः ।१। क्षांत्या शुध्यंति विद्वांसो दानेनाकार्यकारिणः । प्रच्छन्नपापा जापेन तपसा वेदवित्तमाः ।२। अद्भिर्गात्राणि शुध्यंति मनः सत्येन शुध्यति । विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति ॥३॥" इत्यादि । तथा स्कंदपुराणे काशीखंडे

षष्ठाध्यायेप्युक्तं मृदो॰ नश॰। जायं॰ । जलस्य देवत्वात्तत्स्नानं धर्म्महेतुरिति केचित्। कथं ? तत्सर्वव्यापित्व विष्णोरंशत्वात्तथाचोक्तं । भारते आरण्यके पर्वणि । विष्णुराह । अग्निरास्यं क्षितिः पादौ चंद्रादित्यौ च लोचने । द्यौर्मूर्द्धा मे दिशः श्रोत्रे तथापः स्वेदसंभवाः ।१। तथा आदित्यपुराणे तृतीयेऽध्याये । अप्सु तिष्ठंति नैवापस्तं विदुः परमेश्वरं । आपो रूपं च यस्यैव नमस्तस्मै जलात्मने । इत्यादीतिचेन्न । तृणकाष्ठादीनामपि तत्प्रसक्तेर्विशेषाभावात्, सर्वेषां निर्वाहहेतुत्वेन महोपकारित्वादितिचेन्न । धूलिधान्यादीनामपि तत्प्रसक्तेस्तस्मात्प्रागुक्तलक्षणायोगाच्च न जलस्य देवत्वं । भवतु वा तदपि । तथापि कथं तत्स्नानस्य धर्म्महेतुता । यतः पायूपस्थपादाद्यधमांगैः संस्पर्शनेन विकुत्स्यातुच्छवपुर्मलव्युत्सर्गेण च प्रत्युतमहत्तराशातनया नरकानुबंध्यवधप्रोल्लास एव समीचीनतामंचति। यत्क्रियया हि सामान्यजनोपि क्रुध्यति तत्क्रियया स्वदेवमारिरात्ससीत्यहो मोहनटनाटनप्रकारः ॥ अथ मतं न सर्वजलस्नानादौ धर्म्महेतुता, परं गंगागोदावरीनर्मदादितीर्थेषु स्नानादौ सेति चेत् । कथं? तत्रापि जलमात्रत्वाविशेषात् । तीर्थत्वमेव विशेष इतिचेत्, किं तत् द्रव्यतो भावतो वा द्रव्यतश्चेत् साध्वभिहितवानसि। "दाहोपशमस्तृष्णाविच्छेदो मलविशोधनं चैव। त्रिभिरर्थैर्नियुक्तं तस्मात्तद्द्रव्यतस्तीर्थमिति" न्यायोपपत्तेः, परं तत्स्नाने दाहोपशमाद्येन युक्तं नत्वात्मशुद्ध्यादि पूर्वोक्तविकल्पानतिवृत्तेः चित्तमंतर्गेत्यादिव्यासवचनाच्चेति । द्वितीयपक्षश्चेत्तदसत्यं क्रोधविनिगृहीते दाहस्योपशमनं भवति तीर्थं, लोभे च निगृहीते तृष्णाविच्छेदनं च स्यात्। "अष्टविधं कर्मरजो बहुतरभवसंचितं यतो नश्येत् । संयमतपोभिरुग्रैस्तस्मात्तद्भावतस्तीर्थमिति" तल्लक्षणायोगात् । भावे वा तत्र भावतीर्थत्वस्य पूर्वोक्तयुक्त्या तत्र स्नाने तीर्थाशातनाप्रसक्तिः । किंच व्यासेनापि ज्ञानादीनामेव भावतीर्थत्वमभ्यधायि तदुक्तं । स्कंदपु॰ काशी

खंमे पष्ठेऽध्यायेऽगस्त्यो लोपामुद्रामाह ॥ शृणु तीर्थानि गदतो मानसानि ममानघे । येषु सम्यग्नरः स्नात्वा प्रयाति परमां गतिं ।१। सत्यं तीर्थं क्षमा तीर्थं तीर्थमिंद्रियनिग्रहः । सर्वभूतदया तीर्थं तीर्थमार्जवमेव च ॥ २ ॥ दानं तीर्थं दमस्तीर्थं संतोपस्तीर्थमुच्यते । ब्रह्मचर्यं परं तीर्थं तीर्थं च प्रियवादिता ॥ ३ ॥ ज्ञानं तीर्थं धृतिस्तीर्थं पुनस्तीर्थमुदाहृतं । तीर्थानामपि यत्तीर्थं विशुद्धिर्मनसः परा ॥ ४ ॥ ध्यानपूते ज्ञानजले रागदोपमलापहे । यः स्नाति मानसे तीर्थे स याति परमां गतिमित्यादि । यद्यप्यत्रैवानेन पौराणिकव्यासेन पारासर्येण नद्यादीनामपि तीर्थतोक्ता पुण्यहेतुतया तद्यथा । यथा शरीरस्योद्देशाः केचित्पुण्यतमा स्मृताः । तथा पृथिव्यामुद्देशाः केचित्पुण्यतमाः स्मृताः ॥ १ ॥ प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसा । परिग्रहान्मुनीनां च तीर्थानां पुण्यता स्मृतेत्यादि । परमस्य प्रत्यक्षोपलब्ध्यविसंवादवचननिश्चीयमानासर्ववेत्तृत्वस्य निर्युक्तिवचोवादिनः कः प्रेक्षाचक्षुषां विश्वासो वचनेषु । निर्युक्तिवचोवादित्वं चास्य सूपपादमेवेत्युपेक्ष्यते । किं तर्हि कचित्तद्वचःसंवादः प्रदर्श्यते भवतेतिचेदुच्यते । एकांते स्वदर्शनश्रद्धालुतया भवता तत्र मामाण्याभ्युपगतेरस्माकमपि कचित् जिनवचोंऽभोधिसीकरतयैव तद्वचसां सम्मतत्वात् तदाह श्रीजिनस्तुतिकृत् । 'सुनिश्चितं नः परतंत्रयुक्तिषु स्फुरंति याः काश्चन सूक्तसंपदः । तवैव ताः पूर्वमहार्णवोद्धृता जगुः प्रमाणं जिनवाक्यविप्रुष इत्यादि' । तत्र स्नानक्रियादौ पुण्यकणिकापि प्रोन्मीलतीति किं भवेत्तत्र पड्विधजंतुवधोग्रपातकघाताय, येन स्यात्तीर्थयात्रादिदृष्टांतावष्टंभस्य सुघुतेति । ततश्चैवं तद्धाविनाभाविस्नानाद्यधर्मक्रियास्वपि धर्मधियाप्रवृत्तेर्न सर्वथा लौकिकधर्मेषु पड्जीवतत्त्वपरिज्ञानपूर्वकस्तद्रक्षाप्रयत्न इति शुद्धः प्रथमो हेतुरिति ॥

तथाऽसर्ववेत्तृप्रणीतत्वमपि तत्र सिद्धमेव । यतस्तत्प्रणेता किमीश्वरस्तदन्यो वा स्यात् । ईश्वरश्चेत् तन्न, तस्यादेहित्वेन वक्तृत्वायोगात् । वचनं हि वर्णात्मकं । वर्णाश्च ताल्वादिप्रयत्नाविनाभाविन इति कथमदेहस्य तत्संभवः । देहित्वाभ्युपगमे च तस्य । अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः सशृणोत्यकर्णः । स वेत्ति विश्वं नहि तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्तमित्याद्यागमविरोधः । अथास्यावस्थाद्वयमभ्युपगम्यते । एका परमशिवावस्थैव .अपरा च संसारावस्था । हंत तर्हि मायाविनोऽस्य नटवन्नानारूपविडंबनाडंबरस्य कः सुधीः श्रद्दधीत वचःप्रपंचं, कथं च सर्वविन्त्वमिति । अथ स्वरूपेणादेहोप्यनंतशक्तिमत्त्वात्सत्त्वोपकृतये देहमारचय्य तत्त्वमुपदिशतीत्येतदप्यसाधिष्ठं । यतः स नित्य एकस्वभाव ईशश्चाभ्युपगम्यते । ततश्च तस्य स्वदेहोत्पादने सहकार्यपेक्षायामनीशतानुषंगः । ईशस्य परापेक्षायोगात् । एतदेव ह्यनीशतालक्षणं यत्परमुखप्रेक्षितेति । तदनपेक्षाया स किं नित्यं देहमुत्पादयत्यनित्यं वा । नित्यं चेत्तदा सदेहत्वप्रसंगस्तस्य प्रलयाभावात् तथाच स्वरूपेणादेह इति वाङ्मात्रं स्यात् । अनित्यं चेत् तर्हि ईश्वरस्याप्यनित्यताप्रसंगः । सर्वथा कारणनित्यत्वे कार्यानित्यताया अयोगात् । कार्यं निदानाद्धि गुणानधीते इति वचनात्तदन्यकारणांतरस्यानभ्युपगमाच्च, तदभ्युपगमे पूर्वोक्तदोषादिति । किंच तदनित्यं वपुः किमीश एव विनाशयति परो वा कश्चित् । ईश एव चेत् तत्किं येन स्वभावेन विदध्यात्तेनैवापहरति, स्वभावांतरेण वा । तेनैव चेत् कथं कार्यभेदः कारणस्वभावहेतुकत्वात् कार्यभेदस्य । ईश्वरेच्छासहकारिसामग्रीभेदात्कार्यभेद इति चेत् तत्राप्येतत्पर्यनुयोगानतिवृत्तेस्तथाहि येन स्वभावेनैकसहकारिसामग्र्यां स व्याप्रियते द्वितीयायामपि तेनैव तदंतरेण वा । न तावत्तेनैव । कार्यभेदप्रसंगस्य तादवस्थ्यात्तत्रापि सामग्र्यंतरापेक्षायामनवस्थापत्तेः । अथ

स्वभावांतरेण तदा स्वभावेनैवेशस्य भिन्नकार्यकरणे समर्थत्वात्किं सहकारिसामग्रीपरिकल्पनेन । परमेवमीश्वरस्यानित्यताप्रसक्तिः, स्वभावभेदादप्रच्युतानुत्पन्नस्थिरैकस्वभावं नित्यमितितल्लक्षणायोगात् । अथ परो विनाशयतीतिपक्षस्तदेश्वरेण प्रयत्नकृतां स्वां तनुं परो विनाशयतीति महीयानीश्वरस्य महिमोपवर्णितो भवता । अथ स्वकार्यकरणानंतरं स्वयमेवैतद्विनश्यति इति चेत् ननु तथापि स्वविनाशे तत्किमप्यपेक्षते नवा । नापेक्षते चेत् तर्हि निर्हेतुकोऽस्य विनाश इति कथं कादाचित्को, निर्हेतुकस्य कादाचित्कत्वायोगात्। नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणादितिवचनात् । कथं वा कदाचिदकृतेपि कार्ये न विनाशः, कृतेपि वा न न विनाश इति । ईश्वरसंजिहीर्षामपेक्षत इति चेत् न तस्य नित्यत्वेनैकस्वभावत्वेन सिसृक्षासंजिहीर्षारूपविरुद्धेच्छाद्वयायोगस्य प्रदर्शितत्वात् । तन्नेश्वरसर्वज्ञप्रणेतृत्वं लौकिकधर्मेषु कोप्यवलंबि ॥ अथेश्वरादन्यस्तत्प्रणेतेति चेत् । ननु सोऽयं सर्वज्ञोऽसर्वज्ञो वा, सर्वज्ञश्चेत्तर्हि स वेत्ति विश्वं नहि तस्य वेत्तेत्यादीश्वरसर्वज्ञाद्वयप्रख्यापकागमविरोधः । परेषामपि सर्वज्ञत्वेन तद्वेत्तृत्वापत्तेरन्यथा सर्ववित्त्वविरोधात् । अथासर्वज्ञश्चेत् स्ववचसैवाभ्युपगतं । तर्ह्यसर्ववेत्तृप्रणीतत्वमिति सिद्धं नः समीहितमिति ॥ ८ ॥ किंच तत्प्रतिपादकागमा एव परस्परविरुद्धार्थाभिधायितया स्वप्रणेतुरसर्ववित्त्वमावेदयंतीति किमस्माकं प्रयासेन । तथाहि ॥ न हिंस्यात्सर्वभूतानीतिप्रथममुक्त्वा पश्चात्तत्रैव पठितं । षट्शतानि नियुज्यंते पशूनां मध्यमेऽहनि । अश्वमेधस्य वचनान्न्यूनानि पशुभिस्त्रिभिः । तथा । अग्नीषोमीयं पशुमालभेत । सप्तदश प्राजापत्यान् पशूनालभेतेत्यादि । तथानृतभाषणं प्राग्निषिध्य ब्राह्मणार्थेऽनृतं ब्रूयादित्यादि । तथा न नर्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन्न विवाहकाले । प्राणात्यये सर्वधनापहारे पंचानृतान्याहुरपातकानि । तथादत्तादानमनेकधा

निरस्य पश्चादुक्तं– यद्यपि ब्राह्मणो हठेन परकीयमादत्ते बलेन वा तथापि तस्य नादत्तादानं यतः सर्वमिदं ब्राह्मणेभ्यो दत्तं। ब्राह्मणानां तु दौर्बल्याद्वृषलाः परिभुंजत इत्यादि। तथा अपुत्रस्य गतिर्नास्ति इति लपित्वा "अनेकानि सहस्राणि कुमारब्रह्मचारिणाम्। दिवं गतानि विप्राणामकृत्वा कुलसंतति"। इत्यादि। कियंतो वा दधिमाषभोजने कृष्णा विवेच्यंत इति साधूक्तमसकलकवयितृप्रणीतत्वादपि न लौकिकधर्माः सिद्धिसीमंतिनीसंगहेतव इति निरवद्योऽयं द्वितीयहेतुरपि॥७॥

अथ तृतीयस्त्वाबालगोपालागनं प्रसिद्धिपराभूतासिद्धतादिदोष एव। यतस्तत्परिग्रहिणः प्रायो विप्रादयः प्रसिद्धिपदवीप्रपन्ना दरिदृश्यंते तदुपदेष्टारोऽपि च। ते च प्रायः सामान्यजनेभ्योऽपि समधिकक्रोधलोभाद्यभिभूतचित्ताः शिष्टमार्गातिवर्त्तिनो दूरे स्वपरशर्ममर्मभिद्धर्म्मकथाया अपि। ये ह्यगाधलोभांभोधिनिमग्नचेतसो मोहांधततया अपश्यंतः कृत्यादिविभागं विभागं विकुत्स्य म्लेच्छसेवादीन्यप्यकृत्यान्यादेङीयंते, ये चोग्रतरक्रोधाभिख्याद्यामरक्षोधिष्ठिताः स्ववपु.पीडाद्यप्यवगणय्य शिरोजठरपरिस्फोटनादिभिरपि प्रकटयंत्यात्मन्यौत्कट्यसंटंकं तेऽपि पुण्यश्नैपुण्यभाजनमिति कस्य न हास्यमुदेति। तथा कुरवस्थोपस्थादींद्रियग्रामविसंस्थुलितचेतना निःशेषदोषशरणे रमणीजनागरमणादावविरमं रसिकस्वांता गर्त्ताशूकरा इवाशौचनीया धर्म्मं संस्पृशंतोपि मालिन्यधराधरमधिरोहयति। किंचोभिन्नाशेषविशेषातिशयप्रकाशे कलिकालावकाशे आप्तप्रणीतशास्त्राण्येव धर्माश्वबोधयोराधारः। तानि च विप्रैः सर्वजनातिविशिष्टगृहवासोपसेविभिस्तत्पुत्रपुत्र्यादिविवाहाजीविकाद्रव्योपार्जनोपायाद्यनेकचिताचक्रव्याकुलितचेतोभिर्दु साधाववोधधारणानीति कथं ते धर्मधुराधरणधुरंधरतामादधीरन्। किंच तेषा ब्राह्मणत्वमपि नाममात्रादेव न परमार्थतस्तत्स्वरूपं ह्येवमभ्यधायि " गुणैः कुंदेंदुनि-

मलैर्व्रतयमपरायणः । यो वाहयति पापानि स वै ब्राह्मण उच्यते ॥ १ ॥ दानशीलक्षमावीर्यध्यानप्रज्ञादयो गुणाः । यत्र सर्वे समाः संति स वै० ॥ २ ॥ ब्राह्मणो ब्रह्मचर्येण यथा शिल्पेन शिल्पिकः । अन्यथा नाममात्रं स्यादिंद्रगोपककीटवत् ॥ ३ ॥ सत्यं ब्रह्म तपो ब्रह्म ब्रह्म इंद्रियनिग्रहः । सर्वभूतदया ब्रह्म एतद्ब्राह्मणलक्षणं ॥ ४ ॥ एकवर्णमिदं सर्वं पूर्वमासीद् युधिष्ठिर । क्रियाकर्मविभागेन चातुर्वर्ण्यं व्यवस्थितं ॥ ५ ॥ शूद्रोऽपि शीलसंपन्नो गुणवान् ब्राह्मणो भवेत् । ब्राह्मणोऽपि क्रियाभ्रष्टः शूद्रात्प्रत्यंतरो भवेत् ॥६॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव युधिष्ठिर । निर्वृतश्चरति यो धर्म्मं तमेव ब्राह्मणं विदुः ॥ ७ ॥ चतुर्वेदोऽपि यो विप्रः शुद्धं धर्मं न सेवते । वेदभारधरो मूर्खः स वै ब्राह्मणगर्दभः ॥ ७ ॥ कृषिवाणिज्यगोरक्षां राजसेवां चिकित्सितं । ये विप्राः प्रतिपद्यंते न ते कौंतेय ब्राह्मणाः ॥ ए ॥ गोरक्षकान् वाणिजकान् प्रेष्यान् वार्द्धुषिकांस्तथा । मैथुने च रतान्नित्यं विप्रान् शूद्रवदाचरेत् ॥ १० ॥" इत्यादि ॥ अतो भ्रष्टाचारैः प्राणातिपातमृषावादादत्तादानाब्रह्मपरिग्रहाद्यासक्तैरपि परिगृहीतधर्मे कः प्रेक्षाचक्षुषां विश्वासः । यतः कदाचारोपरचितपरिग्रहं निश्चितहितमपि नाद्रीयते वचनादि । यदुक्तं । शीतेऽपि यत्नलब्धो न सेव्यतेग्निर्यथा श्मशानस्थः । शीलविपन्नस्य वचस्तथ्यमपि न गृह्यते तद्वत्॥१॥" इति कथं दक्षोदाक्षमस्तत्परिगृहीतोपि धर्म्मः सेव्य इति विचारणीयं चतुरैस्त्रयीतत्त्वमिति ॥ त्रैविद्यगोष्ठी ॥ ७ ॥ श्रीमत्तपागणनभोऽगणभास्करराजश्रीदेवसुंदरगणाधिपशिष्यकेण । श्रीज्ञानसागरगुरूत्तमपाठितेन बाल्येऽपि तर्ककुतुकान्मुनिसुंदरेण ॥ १ ॥ शरशरमनुमितवर्षे १४५५ स्वस्यान्येषां च शैशवे सुधियां । जिह्वापटिमोपकृते विदधे त्रैवैद्यगोष्ठीयं ॥ २ ॥ इति त्रैवैद्यगोष्ठी श्रीमुनिसुंदरसूरिभिः शैशवे कृता ॥ ॥ ॥ ॥

श्रेष्ठि-देवचन्द्र लालभाई-जैनपुस्तकोद्धार-ग्रन्थाङ्कः ११.

श्रीमद्रत्नशेखरसूरीन्द्रशिष्याणु-श्रीरत्नमण्डनकृता

# श्रीजल्पकल्पलता.

विख्यातिकारकः—नगीनभाई घेलाभाई-जव्हेरी,-अस्यैकः कार्यवाहकः.

इद पुस्तक मुम्बय्या शाह नगीनभाई घेलाभाई-जव्हेरीबाजार इत्यनेन निर्णयसागरमुद्रणमन्दिरे कोलभाटवीथ्या २३ तमे गृहे

वा रा घाणेकरद्वारा मुद्रयित्वा प्रकाशित ।

प्रति ५००

वीराब्द २४३८ विक्रमाब्द १९६८ खिस्ताब्द १९१२

वेतनम् ३ आणका

Sheth Devachand Lalbhai Jain Pustakoddhár Fund Series. No. 11.

## PREFACE.

This work known as Jalpa Kalpa Latâ is written by *Shrimân Ratna mandan* of 'Tapâgachha' who was the disciple of *Shree Nandiratna*, the disciple of *Shrimân Ratna Shekharsuri*

It embodies the discussions held between *Shree Manikya Muni*, the disciple of *Shree Vadidev suri* the learned contemporary of *Shree Kalikâla Sarvagna Shree Hemchandrâchârya*, and one *Shankara* Naiyayika, a native of Benares They are questions and answers in the form of verse The subject matter of this volume will be of great help to the students of Grammar, Poetry and Logic,—Vyâkarana, Kâvya and Nyâya The highly technical character of the terminology (समस्या) employed in these dialogues has made it impossible for the publishers to give any explanations of their own

This is the "Eleventh volume" of the series published by this Fund. We are indebted to *Shree Chaturvijaya*, the disciple of Pravartaka *Shree Kantivijaya* the disciple of *Shree Vijayananda Suri* alias Atmaramji, and Panyâs Shree Anandsagar for going through the proof sheets.

We are also thankful to *Panyas Shree Siddhivijaya* and *Anandsagar* and Pravartaka Shree Kantivijaya for having furnished the original manuscripts.

NAGINBHÂI GHELABHÂI JAVERI

A Trustee for himself and Co. trustees.

*August 1912.*
325, JAVERI BAZAR,
BOMBAY.



# श्रीजल्पकल्पलता—प्रस्तावना.

श्रीगणधरेन्द्राय नतिततिः प्रपोस्फोरीतु

विदितपूर्वमेतद्विदुषां समेषामपेतद्वेषपुषां हृद्गुहाहितधर्मधैर्यकेसरिकिशोरपोषाणां यद्वैक्रमीये त्रयोदशे शतके निखिलस्खिलस्खलनास्खलितवलप्राग्भारपुण्यसंभारभ्राजिष्णुभूघनहतमारविकारसंचारविधिवद्विधूतराज्यादिसमस्तसारनिकरानादिकालीनकर्मततिनिहतिप्रभुप्रभावलब्धरमारामादिसङ्गव्यासक्तपारगतपुरुषोत्तमपशुपतिप्रभृतिलौकिकगणार्च्यदेवसंदोहावितर्क्यपरमयोगिनैघकेनलावलोकनलम्पटकेनलविच्छ्रीमज्जिनेन्द्रशासनानुसारिशासनश्रीपत्यास्थाने दिवाकरायितं श्रीमद्भिराम्नरपराभूतिसमर्पणप्रवणैर्यथार्थाभिधानैः श्रीदेवसूरिभिः।

स्पष्टं चैतत्स्पष्टितगुर्वावलीगुर्वावलीबोधजातस्वान्तपरिकर्मणां "श्रीदेवसूरिरपरश्च जगत्प्रसिद्धो, वादीश्वरोऽस्तगुणचन्द्रमदोऽपि नाल्ये ॥ १३ ॥ येनार्दितश्चतुरशीतिसुनादिवेला-लब्धोल्लसज्जयरमामदकेलिशाली । वादाहवे कुमुदचन्द्रदिगम्बरेन्द्रः, श्रीसिद्धभूमिपतिसंसदि पत्तनेऽस्मिन् ॥ १४ ॥" इत्यादिविलोककानामखिलविन्मतजोषकाणाम्। समजायन्त च श्रीसिद्धाधिपहृदरविन्दावासपद्मापरिवृढा वादाद्यगण्यलब्धिनिधानभूता लोके समस्तसारेतरनिरीक्षणचणे वन्यतमचरणकमलाः श्रीमन्तोऽनेकवादविजयलब्धकीर्त्तिमुखरितदिक्चक्रवालवादिगजघटाविशरणनदीष्णशा-

प्रादुर्भूतश्चाभाग्यवाःप्रवाहप्रोषितसद्दु-
र्दूलशौर्यशरणशिष्यश्रेणिविस्फारितयशोनिचयाः अनेके शिष्या भुजिष्याः । प्रादुर्भूतश्चाभाग्यवाःप्रवाहप्रोषितसद्दु-
द्धिकस्तूरिपरिमलाना "ब्राह्मणश्रमणं" इतिन्यायसत्यापनसादराणा दिवसनाथालोकप्रसर इवोलूकानां द्विजा-
तीनां मत्सरोऽनूतो विवेकेक्षणक्षोदकः । हेतोरमुष्मादेव श्रीमतां परमपुण्यपाथेयपुष्टात्मश्रीमद्वर्णनीयपादानामाग-
मनोत्सवेऽकाण्ड एवारब्धं विवादलास्यं वाराणसीवासवासितानिवर्त्तनीयासममोहनीयमलमुषितान्तःकरणनिलयज्योति
रालयाविवेकालयेन शङ्करश्रामण्या, पर्यनुयुक्ता परमगुरव शैशवयौवनवार्धक्यरूपावस्थात्रितयविहितानेकदुर्दमवादि
वृन्दजागर्जद्गजघटाकुम्भकपणकण्ठीरवायमाणा वाद्युपाध्यलङ्कृताः स्वाभाविकसौभाग्यभङ्गीपरिवृतकरणाः प्रतिभाप्राग्भार-
पराभूतपीयूषपायिप्रणयार्चितचरणदेवाचार्याः श्रीमदाराध्यपादाः श्रीमद्देवाचार्याः, कान्तासम्मिततया शब्दार्थप्राधान्य
प्रोज्झ्य केवलरसप्राधान्यावगाढानेकस्वरूपे काव्यविषयेऽर्थप्राधान्यमनुसृत्य साधनीयार्थसिद्धिसाधनसावधाना-
यामान्वीक्षिक्या चौष्ठगोष्ठीमिषेण । तादृशे चावसरेऽनसरवेदवेधसामन्तिपदामुपस्थानं नासमञ्जसं प्रत्युतोभयपक्षनि
ष्पक्षपातप्रशंसाप्रबन्धास्पदम्, अन्तर्भाषणादिप्रतिबन्धकापत्तिस्त्वापाद्यमानास्थानधर्माख्यानकुशलवार्त्तावृत्तान्तप्रख्येष्व-
न्तेवास्यधिकारबहिर्भूतेषु, श्रीमता च चौलुक्यचन्द्रश्रीसिद्धराजमौलिमुकुटद्योतिचरणचरणरुहामनेके अभूवन्
श्रीमन्तो रत्नप्रभमाणिक्यमुनिमहेन्द्रसिंहाद्याः गुरुप्रवरपरिचर्यापर्याप्त्याप्तपरमार्षादिप्रचुरतरराद्धान्तसिद्धान्ता वादविजया-
हवाहूतजयश्रियः सिद्धान्ततत्त्वनदीष्णताकनकनिकषपट्टा विदिता जगतीतले जगज्जन्तुजातजीवितत्राणक्षमक्षमादिगुण-
गणाङ्गीभूताः, समापतितश्च मल्लप्रतिमल्लन्यायेन वादसमरो जगज्जनयितृविषयस्तत्र मुनिमाणिक्येन माणिक्यदृढताति-

शायिना माणिक्येन महात्मना, एष एव महात्माऽपरेष्वप्येतादृशेषु शेषेषु प्रयोजनेषु दिनकर इव दिने स्वप्रभावं प्रादुरभावयदेव । प्रभावकचरितेऽपि श्रीमद्देवसूरीयप्रबन्धे तत्प्रभावः परमो बोबुध्यत एव, यतस्तत्र कुमुदचन्द्रवादप्रकरणे "अथाह देवसूरीणां, माणिक्याख्यो विनेयराट् ।—कः कण्ठीरवकण्ठकेसरसटाभारं स्पृशत्यङ्घ्रिणा, कः कुन्तेन शितेन नेत्रकुहरे कण्डूयनं काङ्क्षति । कः सन्नह्यति पन्नगेश्वरशिरोरत्नावतंसश्रिये, यः श्वेताम्बरदर्शनस्य कुरुते वन्द्यस्य निन्दामिमाम् ॥ ९४ ।—अथ चोवाच माणिक्यं, विज्ञप्तिं लिख मामिकाम् । श्रीमत्पत्तनसङ्घाय, विनयातिशयस्पृशम् ॥ १११ ॥" एष एव च महात्मा महो हातुमशक्त इहापीति कुशलोदन्तानुयोगमासूत्र्य भट्टभणितिततिमनतिक्रम्याततयानास्थानं वादस्य जगत्कर्तृत्वसद्भावेतरद्रूपं, न चात्र नोद्यमनोद्यधिषणाधिगतधर्माधारागमधारैर्यदुत न तावच्छङ्करोऽनुमन्यते जगत्कर्तृतां यतोऽद्वैतवादरसिको हि सः, स्पष्टं चैतत्तदीयशारीरकमीमांसायां पदे पदे, यतस्तदितिहानुशीलनशालिभिः प्रतिभाभारिभिर्भगवद्गीताभाष्यवाक्यव्रजममरुकमहीपतिमहिषीसमाजिगमिषाविषयकपद्मपादान्तेवासिव्यकचनवीथिविनोदनानुब्रहरिप्रभवानुकरणाख्यानं चावष्टम्भयद्भिः कथमेकान्तो ब्रह्मैकान्तिकः कान्तस्तेषामित्येकान्तयितुमेकान्तःकरणीभवितुमाभाव्येत । नैवाथवास्ति तस्य स्ववचननियन्त्रितस्यान्योऽध्वा, यतः प्राक् प्रकटितवान् यदुत सर्वास्तिकवर्गवर्णितप्राप्तिकमनीयकैलासवासासाधारणकारणकाशीविकाशावकाशादागममत्रेति, तेन लब्धापूर्वलाभक्षयकृत्क्रियाकारिताविप्काराादनन्तरं किमन्यद्देयं स्यादनुत्तरमुत्तरमनुत्तममनीषिणामिति तदेवोत्तरितवान् । भवतु वाऽसम्मतं, वेदानुसारिसमस्तसृष्टिस्पृगनुसरणायाश्रितं, परं तत्रोपन्यस्तोऽनेकसन्न्यस्तेतराश्रितो हेतुः कार्यत्वाख्यः कार्यसाधकतया

विष्टश्चासौ तिलपेपं पुष्टप्रतिभेन मुनिमाणिक्येन श्रीमता माणिक्येन सावयवत्वसंस्थानवत्त्वविकारित्वकृतमितिप्रतिभोत्पाद-करत्नविकल्पशिलासूनुना तमसिद्धं विदधता, आविर्भावितमेतद्धिततेन श्रीमता ग्रन्थकृताद्येन गुणत्राद्येन स्तबकेन, तत्रान्तरा-न्तरार्थक्रियाघटनापद्धतिप्रकटनकूटस्थनित्यतानिराचरीकरणाकाशीयकांष्ठाक्रमवावदितिनभोद्रव्यावस्थानिबन्धनव्यापकता-सद्गतत्परसप्रदेशत्वादि संपादितं लक्षणसमीक्षणविचक्षणेक्षणीयं स्वरूपवृन्दम् । विचाखण्डितं चाचेतनोपादानाभूत-भाविप्रागसतः स्वकारणसत्तासमवायेत्यादिकं कार्यरूपं प्रकल्पितं तच्चिदुत्पादवियदुद्रूपांदापवर्गावस्थावस्थानादिना यथायथं मतिमन्मनश्चकोरचन्द्रायमाणप्रबन्धेन । द्वितीये तु तस्मिन्विसितिविधायि यद् गृहीतमुक्ताक्षरासमस्तपदाष्टादशाक्षरनि-यतानुप्रासगुम्फश्लोकश्लेपश्लिष्टकरपल्लवीवाक्यान्तवर्णैक्यकृधातुकचेक्रीयितक्रियानामधातुगम्यास्तिकाद्यं न्यगादि निगदित-महिम्ना महानुभावेन ततमाततकाव्यकोविदतानुयोगानुयुक्त्यै,' आन्वीक्षिक्यां त्वाद्यस्तबककृत्तहेतुविशेषविशेषकर्त्तनाय दूषणमुदघोषि घुष्टमरयशसा, तत्र विरुद्धत्वमवरुद्धंत्वात्सशरीरत्वेन कर्त्तृतायाः स्वाभाविकोत्पादुकतासकलितमूर्त्तानां तरुगुल्मतृणादीनामकलितधीमद्धेतुकानामबाधमुद्बोधबोधनादकान्ताऽकामविरक्तानामनेकान्तिकता, विकल्पितं च विरुद्ध-युद्धिकृदबुद्धिककुबोधविततध्वान्ततमोऽरातिना मुनिपतिपादपद्मपरागपानपीनमधुपायिनाऽगोच्चरे गणेशजनयितुर्विद्या-दिप्रभावाननु चतुर्द्धा, चराचरोद्भवचरीकृतिचर्यायामार्यतमप्रेक्ष्यं प्रयोजनवत्ताकर्मेरितिस्वभावतादृश्याभिधमभिहितं भिदां त्रितयं त्रिपुरासुरपुरत्रितयमिव । तथाच नचेद्बाधा कार्यप्रत्यक्षेऽप्यप्रत्यक्षत्वे कर्त्तुः क एवापरः कालात्यया-पदिष्टः कालत्रयेऽपीत्यभिप्रायात् । अशरीरत्वेन' नैवासौ विश्वविधाता विश्वीयेऽर्थनिचये ततः सत्प्रतिपक्षता ।

दर्शिता उपाधिभेदा अपि। स्तनके चास्तोकयुक्तिस्तवके तृतीयस्मिन्नुदीराम्बभूवे महाप्रभावेण यत्स्रष्टुः सृष्टेरैक्यमितरद्वा, व्यापकत्वे तस्य वपुषाऽशुचिपदार्थपङ्क्तिपरीतता, ज्ञानरूपेण तु तथात्वे न विधायिता विश्वस्य, असार्वज्ञ्याविनाभूता यथार्थोदितिनोदनपटिष्ठता पशुपतेरिव द्रव्यादिनवानवार्थतावादिनः, तमश्छाययोरप्यपराभवनीयच्छाययोरबाधबोधविषयत्वात्। पर्यन्ते प्रस्पष्टं स्पष्टितं च धर्माधर्माकाशकालपुद्गलादीनां यथायथं रूपं संक्षेपेणातितमेनावगम्य चागमेशितृशयवासपवित्रपवित्राङ्के यथार्थमवगमं सोऽवीभणदर्भकभारत्यभिधया यतिवर्यम्। सर्वं चैतच्छ्रीमद्रत्नमण्डनसिद्धान्ततत्त्वरत्नमण्डितात्मान आविर्भावितवन्तः श्रीमन्तो रत्नमण्डनाः। श्रीमन्तश्च श्रीमद्रत्नशेखरसूरिवर्येषु भासमानेषु श्रीमज्जिनशासननभोभागभानुमालिषु श्रीमन्नन्दिरत्नपादमकरन्दमुग्धमनोमधुपाः। सूरिवराणां भूमण्डलभामिनीमण्डनकालश्च षोडशशतीयो वैक्रम इति श्रीहीरसौभाग्यसोमसौभाग्यविजयप्रशस्तिप्रभृतिग्रन्थतत्त्वलोकनतो निश्चेचीयते निर्णयचणैर्मनीषिभिरिति श्रीमत्प्रभूणामपि स एवानेहा, नचोपलब्धिसृतिमायाता इतरे श्रीमतीया ग्रन्थाः, भविष्यन्ति परमष्टमपत्रेऽवोचाम चेत्युपलब्धेरनुमितेः, परं स्युश्चेदवगता निपुणैर्ज्ञापनीयोऽहमिति प्रार्थये सुध्यनघकृपावृष्टिमभिलाषुकः × × × × × × ॥ वीरात् २४३८ तम वर्षे भाद्रपद–पूर्णिमायां लिखितम् ॥

छत्रबन्ध १




मुशल बन्ध. ३




धनुर्बन्ध २




भल्लबन्ध ४



॥ अर्हँ ॥

श्रेष्ठि-देवचन्द्र लालभाई-जैनपुस्तकोद्धारग्रन्थाङ्के—

श्रीमद्रत्ननन्दीकृता

# जल्पकल्पलता ।

जिनवर! वरद! त्वं सेवके देव! केली-मम्रृतलहरिकल्पां कारयेह स्वदृष्टिम् ।
चुं^२५। रचय मयि च वाचां देवि! चेतः कृपालु, त्रिभुवनभवभावाभासने भानुभानः ॥ १ ॥
जल्पकल्पलतामेतामस्तोकस्तवकत्रयाम् । कुर्वे सर्वेप्सितां मुग्धभृङ्गवाचालतावहाम् ॥ २ ॥

इह हिं पुरा पुरारिसरित्तरङ्गायमाणभणितिभङ्गीभर्त्सितोत्सर्पदीर्ष्यालुवादीन्द्राहङ्कारकालुष्याः शिष्या-

यलिव्याजबहुरूपकल्पनपुरस्सरसततसेवासक्तसुरसूरयः श्रीदेवसूरयः स्वपदारविन्दविन्यासपावितविश्वम्भरं विहरमाणाः प्रापुः प्रमाणापेतकेतकश्वेतकेवलव्यवहारिनिकेतकेतनपटकपटपाणिचालनाकार्यमाणाष्टकाष्ठाकमलाकमलाकमणहिल्लपाटकपुरम्। तत्र च प्रवेशोत्सवे शोभासम्भारभासुरे भवति सति कलिन्दिकाकादम्बिनीबिन्दुनिकुरुम्बसम्बसम्पर्कोल्लसदभिनिवेशाङ्कुरः शङ्करनामा प्रामाणिकग्रामणीर्वाणारसीवासी रत्नाकरस्तुहिनकरमिव गुरुवरं वीक्ष्य विस्तारयामास तास्ता वचोवीचीः, तथाहि–ननु भोः सहृदयाः! हृदयालवालोद्गतायाः कुशलतात्रिदशलतायाः सकलकामितपदार्थप्रदानैकपटुकले मुनय आमनन्ति द्वे फले। यदुक्तम्–"वक्तृत्वं च कवित्वं च, विद्वत्तायाः फलं विदुः। न कवित्वं न वक्तृत्वं, सोऽधीतोऽपि नरः खरः॥ १॥" तद्यदि भवतां मत्याः सरस्वत्या इव हृदरविन्दे वसन्त्याः साहित्यामृतनित्यास्वादतः सौहित्यावाप्तिस्तदा काप्योष्ठगोष्ठी नव्यश्रव्यकाव्या क्रियतां, व्याक्रियतां वा सप्रपञ्चं काव्योदितं किंचिदेकं कवित्वम्। यदि च निबिडजडिमकदलीकाननकर्त्तनकर्कशाऽस्त्रे तर्कशास्त्रे कुशकोटिनिशिततां शेश्रीयते श्रीमतां मतिः। तदा सर्वदुर्वादिकुगर्वपर्वतस्य(स्व)र्वणग्रामायमानं विधीयतां किंचिदनुमानम्। अथ पृथुबुद्धितया द्वितयमप्यदो वेविद्यते वस्तदा भो वाग्देवतासुताः! सुतरां भव्यमभवत्। यतः—"वाग्मित्वं कवितान्वितं यदि तदा गङ्गाम्बुना दक्षिणावर्त्तः कम्बुरपूरि मञ्जरितवानुर्वीरुहः स्वर्गिणाम्। जातः शीतकरः कलङ्करहितः सौभाग्यवत्याः शिरस्याबद्धं मुकुटं स्फुरत्सुरभितालब्धाञ्चनं काञ्चनम्॥ २॥" सम्भवति चैवं, न खलु शारदापद्मयोरिव साहित्यान्वीक्षिकीवि-

नाम्यर्मार्गं तेषां कर्कशतर्कवक्रवचनो-
दयोर्विद्यते विरोधः । यतः—"येषां कोमलकाव्यकौशलकलालीलावती भारती, तेषां कर्कशतर्कवक्रवचनो-
द्गारेऽपि किं हीयते?। यैः कान्ताकुचमण्डले कररुहाः सानन्दमारोपितास्तैः किं मत्तकरीन्द्रकुम्भशिखरे नारो-
पणीया नखाः? ॥ ३ ॥" श्रूयते हि पङ्गुलेतिगुरुबिरुदजयन्तचन्द्रकाशीन्द्रसदसि कविप्रामाणिकतया विष्टरद्वयं
ताम्बूलयुगलं चाससाद सादरं श्रीहर्षनामा विदुरपुरन्दरः। स एव च विरचयामासैवं सौवस्तवम्—"साहित्ये
सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले, तर्के वा मयि संविधातरि समं लीलायते भारती । शय्या वास्तु मृदूत्त-
रच्छदवती दर्भाङ्कुरैरास्तृता, भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम् ॥४॥" तस्मात्प्रतिपदयमका-
नुप्रासा(दा)दिसन्दर्भहृदयङ्गमगद्यपद्यसन्दोहसुन्दरं किमप्युच्यतां;सिच्यतां सुधासारैः सुधीजनघटाकर्णघण्टा-
पथः । अथेदमभिमानिनो भट्टभट्टारकस्य भणितमाकर्ण्य कर्णान्तक इव श्रीगुरुकरुणयाऽमात्रशास्त्रोपनिषदां
पारद्गतः सङ्गतः सुर इव श्रीदेवसूरिसादरपादारविन्दपरिचर्यया मुनिमाणिक्यं माणिक्यनामा व्यतरदनुत्तरं
तत्कालमुत्तरं दत्तरङ्गं विद्वत्तराणाम्। यथा—"साम्यं पिप्पलपारिजातकरभक्ष्माभृद्द्युमणी-खद्योतद्युति-
मालिसागरसरःस्वर्णारकूटादिवत् । यद्गतर्कोपनिषन्निषण्णमतिना तल्लेशलब्धोष्मणामेतेन प्रभुणा भणामि
भवतां जाघट्टि भट्टाः!कथम् ? ॥ ५ ॥" परमुररीकृतबहुलबालभावयोरावयोरेव रेवाप्रवाहान्तरे वारणयोरि-
वान्तर्वाणिविसरे वाक्तरङ्गैः क्रीडितुं समः समायोगः, तद्वदन्तु द्विरावृत्त्या कुतः श्रीमतामिहागमनमासीदसी-
मानन्दकृत्?। निरुपमाऽपवर्गरमाङ्गनापाङ्गमार्गप्रेमनिर्गच्छदनर्गलदुग्धधारासुभगरङ्गत्तरङ्गशृङ्गायमाणोदकाभोग-

भागीरथीसङ्गमगलत्पातकपङ्कपूरपौरपदपातुकनाकलोकश्रियस्तन्मस्तकासीनमुक्तिपुर्याश्च कासीनगर्याः । इति चेत्तदा—"त्वत्तीरे तरुकोटरान्तरगतो गङ्गे! विहङ्गो वरं, त्वन्नीरे नरकान्तकारिणि वरं मत्स्योऽथवा कच्छपः। नैवान्यत्र मदान्धसिन्धुरघटासङ्घट्टघण्टारणत्कारत्रस्तसमस्तभूपललनालब्धस्तुतिर्भूपतिः ॥६॥" इत्यादिवाक्यव्रजव्यञ्जितात्यन्तरतिभिरपि युष्मादृशैः किमिति पर्यहारि दूरेण दूरणसमीरणनिभागीयमाना भागीरथी। हन्त भोस्तपोधनकिशोर!—"पीयूषद्रवकुण्डनिर्गतबृहज्जम्बालपिण्डोज्ज्वलं, भुञ्जानो दधि माहिषं किमगमस्त्वं जाड्यमुद्रामरम्?। किंवा तावकहृन्निकेतनमिदं ब्रह्मप्रक्तसानन–द्वारा बन्धनशङ्कितापशकुना विद्या विवेशैव न? ॥७॥" येनैतावदप्यविश्रान्तश्रुतश्रेणिकठिनपाठकुण्ठितरसनः सेवितसंविदाकरोऽपि न विदाङ्करोतु भवान् यद्भुत–सर्ववस्तुनः स्वीकारपरिहारयोः कारयिता स एव स्वेच्छाकारी परमेश्वरो, येन जघटे जगज्जङ्गमस्थावरम्। ननु अस्मदस्मयमनोमनोरथपूरणदिविजंघटे येन जघटे जगदितिवाक्ये वादिगजघटाभारिभिर्युष्माभिः कर्णगोचरीकारिते निरचरिकरिष्यमाणायाः प्रामाणिकाचारकेलेः प्रस्तावनेयमासीदिति दितिजगुरुणाप्यवर्णनीयां मुदं वयमनुयोभूयामहे। ततः कथयत यं कश्चिदिष्टपसृष्टिपरमूर्धकाष्ठं परमेश्वरं, स किं वृद्धपरम्परोपदिष्टः प्रमाणपथपथिकतां प्रापितो वेति? पक्षयुगलोज्ज्वलो जल्पकेलीमरालो विमलमवगाहते मानसं सुमनसाम्। तत्र प्राचीनो मनोविनोदाय नो जायते, वृद्धानां रागाद्यपगुणागारतया सम्यगुपदेशदानासम्भवेन तदुपदिष्टार्थस्य

१ कमघटे २ गुरुगुणा

सर्वथा प्रत्येतुमनर्हत्वात्, दृश्यन्त एव हि परप्रतारणप्रवणान्तःकरणाः पुमांसोऽनेकेऽप्यन्यथा विचिन्त्य
अन्यथापि प्ररूपयन्तो, यथा तरङ्गिणीतीरे गुडशकटं विपर्यस्तं धावत धावत भो डिम्भकाः! इत्यादिवादिनः।
नाप्येतरोऽपि रोपितप्रीतिवल्लीकस्तर्कविल्लोकहृदयालवालान्तराले, यतस्तत्किमस्ति प्रमाणं? येन जगन्नि-
र्माणकृदुपलम्भोऽवाबोभोत्। न तावत्प्रत्यक्षं, तस्येन्द्रियार्थसंनिकर्षोत्पादुकतयातीन्द्रियविश्वविधातृग्रहणा-
समर्थत्वात्। ननु जागर्त्ति जगतीजनुःसृजोऽनुमापकमनुमानम्—"यच्चण्डद्युतिमण्डलं तुलयति स्वैरीकृतास्त्र-
दृशाम्भोजं भो! जगदीशदार्शितमतव्योमान्तविद्योतकम्। विद्यागन्धनिधानमानमधुपस्तोमानपेतद्विपचेतः-
कैरवभैरवस्फुरदनुच्छिष्टार्थयुक्तिर्भुवि ॥ ८ ॥" तच्चेदम्–भूधरधरादयो, बुद्धिमद्धेतुकाः, कार्यत्वात्, यद्य-
त्कार्यं तत्तद्बुद्धिमद्धेतुकं, यथा घटः। कार्याश्च भूधरधरादयस्तस्माद्बुद्धिमद्धेतुकाः। यश्च तेषामुदयमाने
बुद्धिमान् हेतुः स भगवान् परमेश्वर इति। न तावद्धेतुमुद्धतासिद्धतादन्दशूकी दुष्टापि दंष्टुमीष्टे।
मासबाधानिलाऽनोद्यास्मदनुमानोद्यानमध्यस्थपक्षवानीरावनीरुहविहितविश्रामत्वात् १। नाप्यसौ निष्प-
ङ्कलमकेदारवद्धत्ते दुर्द्धरविरुद्धतां, सबलसपक्षवृत्तिप्रगुणगोफणोल्ललद्युक्तिकल्लोलगोलकदुराकलनीयत्वात्—
२। नच व्यभिचारपिशाचेन च्छलयितुं क्वचिच्छक्यः, सच्छायेऽनुमानवनेऽस्मिन्नसाकमाकाङ्क्षितसाध्य-
साधनायोत्तरसाधकतया विपक्षासम्बन्धशिखाबन्धबन्धुरितत्वात् ३। नापि कालात्ययापदिष्टतादुष्टताडा-
डकया ताडयामासानः, बाधकाभावबाणात्तदुच्छेदनच्छेदुकतानुकृतजानकीजानिकत्वात् ४। नापि दुरुद्धर-

ग्रं० जल- ॥ ३ ॥ ज्ञेय-

विरुद्धाव्यभिचारितावारितावकाशः, प्रतिज्ञातार्थवैपरीत्यप्रत्यायनप्रत्यलप्रत्यनुमानाभावात् ५। तस्मात्— "मृत्सौरभ्यमिवाम्बुसेचनमनोनेम्योरिव प्रस्वनः, पत्रिस्तोम इवाञ्जनं घनमिव श्लिष्टं तडिद्विभ्रमाः। दीपाकम्पनतेव मारुतलयं धूम्येव धूमध्वजं, हेतुः सैप तमन्वमीमपत नः शुद्धः सुधीसाक्षिकम् ॥ ९ ॥" अत्र प्रतिविधीयते—भोः पण्मतोपनिपण्णनिर्दूषणधिषणाभूषणाः! यौष्माकीणेऽमुष्मिन्नवयवसुन्दरेऽनुमानोदारकेदारे केऽप्यस्माभिरुदीरिता दुरन्ताऽसिद्धतादिदोषतुरङ्गाः स्वैरं चरन्तः केन शक्या निवारयितुम्। तथाहि—हेतुस्तावदयमनिर्द्धार्यमाणस्वरूपतयाऽसिद्धतावन्धकीसम्बन्धलब्धापकीर्त्तिः। कार्यत्वं हि किंलक्षणं विचक्षण! विवक्षितवानसि क्षित्यादौ? किं सावयवत्वं संस्थानवत्त्वं विकारित्वं कृतमेतदितिप्रतिभोत्पादकत्वं वेति चतुर्भेदी वेदीव दीव्यति व्यतिकरे वादिविजयश्रियः परिणयस्य। तत्र न प्रथमः पृथुमतीनां मनोरथरथे सारथितां प्रथयति प्रकारः—"यस्मात्त्वदाशयकुशेशयशो(शा)त्स्यते तत्, कार्यत्वलक्षप्रबलक्षशकुन्त्यपत्यम्। भूभूधरप्रभृतिषु प्रथितप्रतीप—भावेषु चाभ्रककुभादिषु वम्भ्रमीति ॥ १० ॥" ननु कथं नभःप्रभृतौ (तिष्व)भिप्रेतकार्यत्वप्रचारो येन युष्माकं हेत्वनैकान्तिकत्वेहा फलेग्रहिस्तस्य निरवयवत्वादिति चेद्दिदम्भमिदं भवानवादीत्, परमम्बुजबन्धुनिम्नमम्बरादौ किं समग्रे सम्बद्धमुत तत्प्रदेशे? नाद्यिमस्तरणिमण्डलतावत्परिणामतापत्तिप्रत्यक्षबाधादिवद्दोषोदयात्। द्वितीये तु प्रदेशाभ्युपगमेन वियदादेः कथं न सावयवत्वम्? प्रदेशावयवयोरेकार्थवाचकतया प्रयुक्तेः। तथा च मतव्याहतिहेत्वव्यभिचारादयोऽपि लब्धप्रचाराः स्युः। अथ परमाणुमयो विभागोऽवयवः

श्यदे
ति/न्य।

तदितरस्तु प्रदेशस्ततो व्योमाद्यपरमाणुजतया समदेशं स्यान्नतु सावयवमिति कुतस्त्यः साधनव्यभिचार
इत्याचक्षीथास्तथापि—"दोर्पोल्लासवशप्रसृत्वरतमस्कॉण्डे दिदेदीपया—मासानोऽवयवप्रदेशविपयो भेदस्त्वया
दीपकः। अस्माभिः परमाणुतः प्रकटतामानेष्यमाणं पुरो, दुर्वारव्यभिचारदीर्घरसॅनं निर्ध्वाय विध्यास्यति
॥ ११ ॥ यतः पूर्वं तावदम्बरादेरपि विभागाः समग्राः परमाणुमया एव सन्ति न खलु कज्जलचूर्णपूर्णसमु-
द्गकवन्निरन्तरपुद्गलपूरिते लोके स कश्चिन्नभसो विभागोऽस्ति यो निर्भरं न बिभराम्बभूवेऽणुभिः। तत्कथं
न हेतुरेष व्यभिचरिष्णुः। अथ गम्भीरगीस्तरङ्गभङ्गीसागरः सङ्कुणीपे. यदुत—परमाणुमया इत्यस्य परमाणु-
निष्पन्ना इत्यर्थः प्रथयत्यस्माकमन्तःकरणाम्बुरुहान्तरे बालरोलम्बलीलायितम्, न च नित्यतया वियदादेर्विभा-
गास्तथाभूता भवन्ति, किन्त्वसमवेतानेकजातीयपरमाणुपूर्णास्तेन स्तेन इव नैष दोषः साधनध्वंसहेतुः। तदा
तु पर्यन्तावयवतयाभ्युपगतेऽप्येकस्मिन्नणौ परमाणुनिष्पन्नताया अभावादव्यापकत्वं भवादृशवादिशतेनापि
नापाकर्तुं प्रबोभूयत इत्यभूदवयवलक्षणस्यास्य व्यभिचारः। द्रव्यसमवायिकारणमवयव इति चेत्तल्लक्षणं
वक्ष्यते तदपि समवायस्य पुरो निरासिष्यमाणतया द्रव्यसमवायितानुपपत्तेरसम्भवभवत्परिभवम्। ततो
व्यभिचरितभिन्नलक्षणतया प्रदेशावयवयोरभेदेन वियदादेः सप्रदेशत्वमङ्गीकृत्यापि सावयवत्वसाधनव्य-
भिचारमनपाचेकीयाश्चकाणश्चतुरचक्रे चतुर्थव्रतविलोपकामानुपशमोपाख्यानमाख्यापयसीति—"जातो यस्य
विभागभिन्मयगङ्कः पीडावहोऽसम्भवाङ्गुष्ठाव्यासिदृढाङ्गुलीयुगलतः प्रस्फोटनिष्पीडितः। मत्पीयूषमयोक्ति-

युक्तियुवतीसूतः सतां वल्लभः, सोऽयं हेतुगृहे तुलामुपगतो दोषः शिशुः खेलतु ॥ १२ ॥" किञ्च—सावयवत्वं किमुच्यते? अवयवेषु प्रवर्त्तमानत्वमिति चेत्तदा यदावयवेषु ते सामस्त्येन वर्त्तेरन्नेकदेशेन वेत्यवतरति शरत्तरणिमण्डलमिव पक्षयामलं कुयुक्तिघनपटलव्यापक्षयामलम्। तत्र नादिमो वादिमोदाय, सामस्त्येन वर्त्तने ह्येकस्मिन्नेवावयवे सर्वस्य पर्वतादेः परिसमाप्त(त)यानेकवृत्तित्वाभावस्तथाचाणुमात्रतानित्यतादिप्रसङ्गः सङ्गमङ्गीकुरुते। द्वैतीयीकोऽपि न प्रामाणिकः, पर्वताद्यवयविनो यौष्माकमते निरंशतायाः स्वीकारात्ततः सावयवत्वहेतुं स्वरूपासिद्धिरूपाऽस्खलितस्वरूपा हितघातमप्यालोकयामः ॥ अथ संस्थानवत्त्वमार्य त्वं कार्यत्वं प्रति पनीपद्यसे स, तदा तदपि व्योमादिनापादितानैकान्तिकृतापवादम्। संस्थानवत्त्वेपि तस्य नित्यत्वेन बुद्धिमद्धेतुकाभावात्। ननु कोऽयमकाण्डकूष्माण्डोद्भेदविडं(द)बी वाग्डम्बरः। अभूवन्नष्टभूपाः परं कूर्परे कूर्चं कस्यापि नापन्नमेवं बभूवांसो भुवां भूयांसोऽपि वावदूकाः परमाकाशादेः कोऽपि नाचकृशौ संस्थानवत्त्वं, तथापि चित्रीयितचित्तवृत्तयः पर्यनुयुञ्जमहे, कीदृशमाकाशस्यैव संस्थानमिति चेत्तत्तदवच्छेदकपदार्थपरिमाणसम्पादितावच्छेदकस्वरूपमिति प्ररूपयामः। ननु यदीदमेव नभःसंस्थानं तदा भूरिभेरीभाङ्कारभङ्गुरितकर्णान्तप्रासादपारापतत्रासतालपुटपाटवं प्रकम्रमासे, नह्यवच्छेदकवस्तुनिवहविहितानेकताया इव व्योमनि तज्जनितसंस्थानिताया अप्यौपचारिकतयानैकान्तिकत्वातङ्कतरलतां कलयत्यस्माकं तिलमात्रमपि चेतः। भवत्वेवं, परमुपचारः सप्रमाणं स्यादप्रमाणं चेति भेदयुगली रङ्गयुगलीव लीलायते चतुरचेतोऽरविन्देषु। तत्र

प्रमाणं यदि तदा ध्वनिरनित्यः प्रमेयत्वादित्यस्यैवानैकान्तिकत्वं सम्यगस्यापि स्यात्। अथाप्रमाणं तत्कथं मानदार्शीग्रन्थकारो भूपैगानीकथदाकाशस्तु घटाकाशादिभेदभिन्नोऽनन्त एव इति, अप्रमाणोपचारघटितानां घटाकाशादीनामप्रमाणत्वे, नभसस्तद्भेदभिन्नतानुपपत्तेः। यदि ह्यप्रमाणं तुरङ्गशृङ्गादयः सन्ति तज्जगदङ्गणे किमङ्गीकुर्वन्ति कस्यापि भावस्य भेदताम्। अथ—"स्वमान्तः सुरतां पुरा कृतवता केनापि किं नार्पया-मासे दर्पणदुर्पणमगुणितं पण्याङ्गनाया धनम्? । इत्थं यादृशमाविभर्त्ति गगनं संस्थानितां तत्कृतां, हेतुस्तादृगुपैतु जातु चतुरानैकान्तिकत्वं तु नः ॥१३॥" इतिचेद्भ्रमकृथाः, सर्वथाऽसंसहिष्णुर्यदङ्गीचकर्थोपचरितां व्यभिचारिताम्। अपचोररीचरीकारिपीष्ट त्वया मुख्यवृत्त्यापि सा, यतो यत्पर्वतादिवर्त्तिष्णु संस्थानं तत्किं गुणो गण्येत गिरा नेति—"कक्षीकृतविपक्षीकः, सोम साम्यधरः स मे। किं नु हंसो न मांसो न, व्यासो वाचां सुधामुचाम् ॥१४॥" ततश्च यदि गुणस्तदा पञ्चविंशतिगणेयेषु गुणेषु कः स इति वाच्यं? परमाणुप्रचयोपजनितं परिमाणमिति चेत्तर्हि साधुना साधनेनामुनार्द्रमण्डितापक्षलक्ष्मीपक्ष्मलाक्षीजल्पकेलीदीक्षितानां तन्तनीत्युत्तरङ्गं(विरङ्गम्,) धूर्जटिजगज्जन कतासाधनार्थप्रयुक्तानुमानोदन्यदासीनपक्षपुण्डरीकाक्षकुक्षिनिक्षिप्तभुवनभावाभोगान्तर्भूतप्र-भृत्यनिशापरिमलरूपादिपदार्थेषु परमाणुप्रचयनिष्पन्नपरिमाणापेतत्वाद्धेतोरप्रवृत्तेः। अथ बुद्ध्यादिगुणाः पदैरशा न्यूतिनीत्या निजनिजाश्रयोत्पादेऽनर्थान्तरतयोत्पादुकाः पृथक् पक्षीकर्तुं न योग्या इति गिर्यादिगुणिग्राम एव पक्षस्तत्र च समस्ते हेतोः प्रवृत्तेः कथमीषदप्युक्तदोषानुषङ्ग इतिचेत्तदा शशकसङ्काशदोषदूराटने पुरः प्रा-

जल्प- ॥५॥ सूपन्यस्यते

क० ल० स्त० १

दुरासीदुरात्मा मतव्याघातव्याघ्रः, उत्पन्नं सद्द्रव्यं क्षणमगुणं तिष्ठतीति भणनेन गुणानां पृथगुत्पादाभ्युपगमात् । अथ चेश्वरपृथगुत्पाद्यत्वेपि गुणानामेकक्षणमपहाय शेषकालं गुणिषु समवायेनावस्थानात्तद्गतपरमाणुप्रचयजपरिमाणं ते, तत्कथमयं भागासिद्धिभाग्घेतुरिति भाषसे । तदोपचरितात्तादृक्परिमाणाद्यथा भागासिद्धिं सिद्धामपि निषेधसि तथौपचारिकसंस्थानादाकाशादावसिद्धामप्यनेकान्तं (न्तता) समीचीनतया स्वीकुर्याः। नो चेदनैकान्तिकतास्थापनमिव भागासिद्धतोत्थापनमप्यसमीचीनमेव स्यादुभयत्र सादृश्यादिति मन्दीकृतवादीशोक्तिः प्रतिबन्दी नामादीनवः स्यादुक्तंच—"गृहीते वादिना वाक्ये, तद्वास्यग्रहणं हि यत् । प्रतिवन्दीति सा प्रोक्ता, विवादक्रमकोविदैः ॥ १५ ॥" न च गौणमुख्यन्यायेन मुख्यतया शिखरिप्रमुखाणामेव तज्जन्यतासाधनाय पक्षाद्युपन्यासप्रयासमकुर्मो, गुणानां तु गौणानां तदनुसारितया धान्यप्रयोजनोपक्रान्तकर्षणतृणोत्पत्तिरीत्या स्वयमेव तत्सिद्धिः स्याद्, अतस्तेन पक्षान्तरालपतयालच इत्यालपनीयं,कूटस्थनित्येषु चूपाङ्कास्यात्समुत्पद्यमानानां बुद्ध्यादीनां प्राधान्येन तज्जन्यतासिद्ध्ये नियमतः पक्षीकार्यतया हेतोरुदितदोषाऽप्रमोषात्, गुणानां तदुपपादनाय अनुमानान्तरं निर्मास्यत इति चेत्? तर्हि तत्रोत्तमाङ्गमुखलोमक्षालनपृथक्खलिन्यायः स्खलयितुं खलायिष्यते । अथ समिति सामस्त्येन समवायतोऽवयवेषु अवयविषु च स्थानं स्थितिरित्यर्थः । संस्थानं क्रियैवास्थीयते । तथाच विगतविगानाऽवकाशो भगवद्भर्भजन्यो जाघटि जगदाभोग इति अङ्गीकुर्वीथास्तथापि—"दिग्वासो दर्शनैकः शिवपुरमगर्वकाममामन्त्रयस्व, स्वान्तं किं वस्तु सत्यास्तुलयति कम-

र्थतः ॥५॥ भी

= अना० ए। का मा-कांति।ऽस्मात्नीति}  १ अना, २दे ए २ा कामा। ३कीदृश कीर्ति कातयुक्त,

श्लाघ्यामतः को मरालम् । अर्थिभ्यः किं कदर्यः कथयति पवनः किं करोत्याह विष्णुः, कीदृग्वर्षाभुजोऽब्दस्तव भवति वदेः कीदृशो हेतुरेषः ॥ १३ ॥" त्वमेव ब्रूहि कीदृशो ? नहि वयं पीयूषयूषपेपीयिषापूरकं मुखमिगाम्नोनिपामीश्वरं दोषभाषणविषमविषवर्षणाद्भयाम इति चेत्तर्हि नित्यतया पक्षाद्विपरीतेष्ववयवत्वसामान्येऽवयवान्तःसमवायावस्थानरूपायाः क्रियाया सद्भावादनैकान्तिकः? । प्रश्नोत्तरं । ततो द्वितीयोऽपि त्वदाशगोज्ज्वलकैरवरविकल्पो विकल्पः २ । अथ विकस्वरपिकस्वरमधुरवाचोयुक्तिवल्लीवनोल्लासिदशनांशुकुसुमसारेऽनल्पमल्पयसन्तावतारे जातीसजातीयस्तृतीयः । अन्यथा सतो भावस्य अन्यथाभवनं हि विकारित्वं तव प्रचुरतरं चन्द्रमुकुटादिकूटस्थवस्तुष्वपि व्यापिप्रियते यते ! यतः कूटस्थः पदार्थः किमर्थक्रियाकरणस्वभावस्तद्करणस्वभावो वेति विकल्पद्वैतं जल्पद्वैतपिडकप्रकापडतुण्डकण्डूविखण्डनकठिनमुत्तिष्ठते । ततश्च यद्याद्यः प्रकारः भिप्रकारः, तर्हि सोऽर्थक्रियाकरणस्वभावः सन् क्रमेण कार्याणि कुरुते यौगपद्येन वा? । तत्र प्रथमपक्षस्य तूर्यं कूटस्थवस्तुविकारितापादनविकटकार्यकरणार्थसुकृतप्रकटपीठकस्य पश्चाद्विचार्यतया धुर्यास्थीयते द्वितीयस्तनो यौगपद्येन यद्येष कार्यकार्यङ्गीक्रियते तदा प्रथम एव क्षणे कालान्तरकरणीयसकलस्वकार्यकरणाद्द्वितीयादिक्षणपरम्परायां न किंचित्कर्त्तव्यमस्तीत्यनर्थक्रियाकारितयाऽवस्तुतामास्तिघ्नुते । अथ यथा निर्वृतात्मा निर्वर्तितसर्वतत्तत्कर्त्तव्यतया पुनस्तत्कर्त्तव्यतया पुनस्तत्करणायाप्रवर्त्तिष्णुरपि नाऽवस्तु स्यात्तथा युगपदेकक्षणसमापिताशेषकार्यः शेषकालमतत्करोऽपि कूटस्थ इत्याख्यायते तदा किमुत्तरमिति चेत् ? अवस्तुताप-

त्तिरिति व्यतारिष्मेवास्माभिरुत्तरं; तव किं निर्वृतस्यापि तथात्वमापद्यते। नैवं, स हि कार्येच्छाऽदृष्टादिसांसारिकसहकारिकारणकलापव्यपाकरणेन कृतार्थतया च किमपि कार्यं न कुर्यात्, परमवार्यवीर्यान्तरायक्षयोपार्जिता वीर्यपर्यायवाच्या तस्य शक्तिः प्रत्युतानन्ता वरीवर्त्ति, सर्वशक्तिवियुक्तस्यैव चावस्तुता, तत्कथं तस्य तस्याः प्रसङ्गः। न चैवं घटाकोटिमाटीकते कूटस्थः। स हि यदि प्रागिव पश्चादपि शक्तिसम्पन्नस्तर्हि किन्न पुनस्तानि कुर्वीत। न च कृतार्थत्वादिना तदकृतिः श्रेयसितरा, प्राक्कार्यकरणस्वभावस्य पश्चात्तदकरणस्वभावतावतारेऽस्य द्विरूपतापत्तेः। तथाच क्रमेलकमौलिकीलकनाशमनेशत् कूटस्थता, एकस्वरूपेण सकलकालव्यापकतायास्तल्लक्षणत्वात्। अथ समस्तार्थसमापनसमये समग्रापि शक्तिः समापद्येत्तदाऽस्मदाख्यातावतारादवस्तुतापत्तिरेवेति। अथ क्रमेण कार्यं करोतीत्यङ्गीकारस्तदा—"जिह्वारङ्गतरङ्गिता दशनरुग्मुक्तावलीमालिनी, वाक्पीयूषनदी मदीयवदनावासे वसन्ती सती। एकान्तं क्रमपक्षदक्षपुरुषं नारीव याऽरीरमत्, सूते सम्प्रति सा प्रभेदसुतयोः सश्रीकमेतद्युगम् ॥१७॥" कूटस्थः क्रमेण कार्यं कुर्वाणो येनैव स्वभावेनैकं करोति तेनैवापरं स्वभावान्तरेणवा!। यद्याद्यस्तदा सदा सकलकार्याणामतिरूपतापनीपत्तिः स्यादेकरूपतापनीपत्तिः, अभिन्नस्वभावेन तेषामुद्भावनात्। अथ धूमः पावकस्येव कर्तृस्वभावैकताकार्यैकरूपस्य नान्वयव्यतिरेकावनुविधत्ते, स्तम्भकुम्भादिकार्याणां भेदाभेदयोः समवायिकारणभेदाभेदसम्भूतयोरेवोपलम्भात्, तेनैकस्वभावजन्यत्वेऽपि समवायिकारणभेदात्तेषां नानात्वं भावीति वीतवैभाष्यः प्रकार इति चेत्! मैवं मनसि

मन्येथाः मृल्लक्षणैकसमवायिकारणघटितानामपि घटघटीशरावोदञ्चनादीनामाबालगोपालं भेदप्रतीतेः। ततो जगति ×येषां च नानारूपत्वं तेषामेककर्तृकत्वेऽपि भिन्नस्वभावजत्वमित्थमेवान्वयव्यतिरेकावपेतव्यभिचारतया विवेकिप्रवेकप्रियावतो भिन्नस्वभावोद्भावितानां यौक्तिक्येवैकरूपतापत्तिः। अथाद्येतरः सम्पद्येत रतये, तदापि किं पूर्वस्वभावमविहाय विहाय वा? इति विहायस्तलविहरदहस्करहरिणाङ्काविव प्रकाराविमौ भावान्धकारध्वंसरसिकावुज्जिहाते। तत्राद्यो न हृद्यो, नहि स्वभावं प्राचीनममुञ्चन्नुदीचीनमञ्चतीति चतुरचेतोरुचिरं, तदपगम एव तदुत्पादानुभवात्। नापि द्वितीयो, नवीनस्वभावोद्भवे कूटस्थनित्यत्वोपरमो मा भूत्। अप्रच्युतानुत्पन्नस्थिरैकस्वभावं हि कूटस्थनित्यम्। एवं च घटादेरपि कूटस्थनित्यता दुर्निवारा। पूर्वस्वभावत्यागेनोत्तरस्वभावस्वीकारस्य तत्रापि सद्भावाद्। इति नार्थक्रियाकरणस्वभावकल्पना जल्पनायोचिता। अनर्थक्रियाकारित्वपक्षे त्ववस्तुत्वं, यदेवार्थक्रियाकारि तदेव परमार्थसदित्यादिवादिभिः कुवादिभिरेव प्रत्यपादि। ननु ये धर्मास्तिकायादयस्त्वया निष्क्रियाः स्वीक्रियन्ते तेषां का गतिः? इति चेन्न, पर्यायरूपोद्भवनविनाशनवर्त्तनादिसामान्यक्रियाकरणस्य विशेषक्रियाविषयहेतुकर्तृतायाश्च तेष्वभ्युपगमादकूटस्थतया तदुपपन्नत्वाच्च। ततः शङ्करादीनामपि भिदुरस्वभावतयाऽन्यथा भवने युक्तिभिः साधिते सिद्धं विकारित्वम्। तथा च—"या जज्ञे जनकं विनैव गणपो वो पैवो भुज्यते धाष्टभिः, पण्यस्त्रीरिव कृत्रिमप्रणयिनी यानार्यसुभ्रूरिव। केकीवाञ्चितपञ्चवर्णमपि यन्नामान्दहेलातुलाकन्या तालुषु ताडितेव यदिता तत्याज सा स्वालयं ॥१८॥" प्रहेलिका॥ शङ्करस्य

× विनामकः।

च विकारित्वे तत्करणायापरेण बुद्धिमद्धेतुना शङ्करेण भाव्यं, तस्याप्यपरेणेति विपुलव्योमतलव्यालम्बिधूमवल्लीवास्खलितमुल्लसन्ती सती दुर्निवारानवस्था न वः स्थापयेत्तत्त्ववित्त्वम् । अविकारित्वे तु जगद्धटनं कल्पकोट्यापि न घटामटाट्यते । तत्र तृतीयोऽपि शङ्कराणां प्रियङ्करः । अथ सुभटकोटिनिर्द्धाटनप्रकटितप्रतापोष्मभीष्मादिवीरप्रकाण्डखण्डितदोर्दण्डताण्डवपाण्डवनिधनेच्छुदुर्योधनशल्यसेनापतिपदन्यासन्यायेन जल्पाकूपारपारप्रापणप्रवहणायमानप्रथमपक्षत्रयाशक्यव्यवस्थापनस्थाणुजगज्जनकतासिद्ध्याशावशात्तुच्छोऽपि तुरीयः प्रकारः शरणीक्रियते, तदापि मण्डपाद्याच्छादकच्छदाद्यपाकरणकूपादिखननोत्सेचनादिभिराकाशं कृतमिति व्यपदिश्यमानतया कृतमेतदिति प्रतिभोत्पादकत्वस्य नभस्यपि भावाद्धेतुः खल्वसौ बकुलोहरक्षाविरहितः स्यादनैकान्तिकतावेतालवनितोन्तजनितातङ्कच्छलापन्नः । नन्वाकाशकृततापतीतिः कृपाणीव समारोपखरोपलापातकुण्ठीकृता प्रयोगपुरुषस्य प्राणभूतं हेतुं हन्तुं न शक्तेति चेत् प्रेमपात्रप्रियतमापुरः प्राञ्जलोऽयं प्रलापः । अतस्मिंस्तदध्यवसायो हि समारोपो यथा—“बोधो नौयानवृक्षस्यदविरहिलयस्वप्नराज्येन्द्रजालव्योमोर्वीमेलमायोल्मुकरयमृगतृष्णाम्बरश्यामिकानाम् । अभ्रोच्चानुच्चभावाग्रहमिलनवियद्बालवप्पीहपाथोलौहित्यर्द्धीन्दुशङ्खप्रमुखकपिशताशुक्तितारोत्तराणाम् ॥ १९ ॥” न च कूपादावकृतमाकाशं कृततया प्रतीयते, तत्र तत्र तदाद्याकारविशेषितस्याकाशस्यैव करणात् । द्रव्यस्य पूर्वपर्यायपरिहारणपुरस्सरोत्तरपर्यायस्वीकारणं हि करणं, ततो यथा मृद्द्रव्यं स्थासकोशादिरूपतां परित्याज्य घटरूपतामापादितं घटः कृत इत्युच्यते,

तथा नभोऽपि भूगर्भगततावन्मात्रपार्थिवपरमाणुसङ्घातसंयुक्ततापर्यायं परिहार्य खनकैरनेकैः कूपाद्यभिधेयं तद्विभक्ततापर्यायमङ्गीकारितं कूपादितया कृतं व्यपदिश्यते। ननु द्रव्यतोऽत्यन्तव्यतिरिक्ताः पर्यायास्तत्कथं तेषां करणे तस्य कृतत्वं तात्त्विकम्? इति चेन्न, तस्मात्तेषां हि कथंचिदपार्थक्यमेव दृष्टमदुष्टम्; अन्यथा यथा पृथुबुध्नोदराद्याकाराः कुम्भस्य तथा स्तम्भस्यापि किं न बोभुवति? उभयत्र भेदाविशेषात्। भिन्ना अपि समवायतः कुम्भेन सम्बद्धाः? इति चेत्तदापि ते कुम्भेनेव स्तम्भेनापि सम्बद्धाः प्रसज्येरन्, समवायस्य व्यापकत्वादेकत्वाच्च प्रत्यासत्तिविप्रकर्षाभावेन सर्वत्र तुल्यत्वात्। एवं च भेदैकान्तवादिनः पर्यायाणां नियतैः सम्बन्धिभिः सम्बन्धासिद्ध्या जगदासमं जगदासमञ्जस्यमेव प्रसासज्यते। तथा सति मौक्तिकमालान्तरालमिलद्वरकुवद्विविधपर्यायानुयायिनो द्रव्यस्य कथंचित्तदभेद एव सुन्दरः। तथा चावाचि प्राचीनाचार्यैः—"द्रव्यं पर्यायवियुतं, पर्याया द्रव्यवर्जिताः। क्व कदा केन किंरूपा, दृष्टा मानेन केनचित्? ॥२०॥" अतः सिद्धमबाधितमम्बरकरणम्। अथ कूपादौ कृतत्वमन्यत्र चाकृतत्वमित्येकस्मिन्निर्देशे चाकाशे कृतत्वाकृतत्वयोः कथमवस्थितिः? परस्परविरोधादिति चेत्, मैवम्, यतो योऽयं कृतत्वाकृतत्वयोर्विरोधव्याधिरुद्भाव्यते, स तावदिह न सहानवस्थानरूपः सम्भवी, तस्य परस्परविरोध्युभयधर्मनिर्मिताऽध्यासत्वात्, सम्भवे वा चिरकालमेकत्र जलतडिज्जलधिवाडवह्व्यवाडवस्थितिनिदर्शनप्राज्यभैषज्यप्रतिक्षेपणीयत्वात्। अथ परस्परपरिहारस्थितिलक्षणः, स च स्वरूपनिष्ठो व्यावर्ण्यते लब्धवर्णैस्ततो नैकं विरुद्धद्विस्वभावं स्यादेवं भाषसे, तदपास्तप्रभावं, एकस्यापि प्रस्तरादि-

वस्तुनस्तुपारस्पर्शवतः कालान्तरेण तरणिकरनिकरव्यतिकरवशादुष्णस्पर्शनात्। समसमयं विरुद्धोभयमयो न प्रमीयत इति चेत्, तदप्यकमनीयम्, पावकस्यैकस्यैव समकालमुष्णानुष्णस्वभावस्योपलम्भात्। वह्निर्हि दहनस्वभावः स्पर्शरूपेण नतूत्फालज्वालाकुलोऽपि रूपरूपेण, अन्यथा रूपसंनिकर्षेण तदालोकने लोकनेत्रप्लोषणमापनीपद्येतेति अवोचाम चान्यत्र—"गत्वा यौगमतेऽक्षिपाणियुगपच्छीतेतरस्पर्शतः, स्याद्वादं जगदीशदर्शितमसावातिष्ठिपद्विष्टपे। तत्पुण्यादिव देवतावदनतामग्निर्जगाम व्रजन्नूमव्याजमधव्रजं निजमजल्पानर्ज तेजस्विताम् ॥ २१ ॥" तदेवं जातवेदसि स्पर्शरूपगतयोर्दाहादाहयोरिवाकाशे निष्प्रदेशेऽपि पर्यायद्रव्यविषययोः कृतत्वाकृतत्वयोरैककालिकी वृत्तिरविरुद्धैव। न च नभो निष्प्रदेशं, पूर्वोक्तयुक्त्या नभः सप्रदेशं युगपन्नानामूर्तैः सम्बध्यमानत्वाद्वसुधावदित्यादिप्रमाणैश्च तस्य सप्रदेशत्वसिद्धेः, तथाच सत्येकस्मिंश्चीवरावयविन्यावृतानावृतरक्तारक्तचलाचलतादय इव वियति विरुद्धयोरपि तयोः प्रदेशभेदेन वृत्तौ (कुतः) कृतौजास्सञ्जायते विरोधारातिरनेकान्तधरानेतुः। तदस्मान्नित्येऽप्याकाशे कृतबुद्ध्युत्पादादनेकान्तकृतान्तदन्तान्तरालप्रवेशनितान्तव्याकुलो हेतुः। निःस्वश्रेष्ठिस्वप्नान्तःकार्त्तस्वरकटाहोत्पादनपटभरणन्यायेन भागासिद्धोऽप्ययम्। कूपौकःप्राकारादिष्विव पर्वतोर्वीतर्वादिषु कृतमितिप्रतिभोत्पादस्याभावात्। प्रामाणिकानां तत्र वर्त्तत एव सेति चेत्, तर्हि भो! बर्हिणा इव बहुलसन्देहलोलाहिनिस्तर्हणाः केन प्रमाणेन तेषां तदुत्पत्तिः। न प्रत्यक्षेणातीन्द्रियतया क्षित्यादि कुर्वाणे शर्वाणीपतौ तस्याप्रवृत्तेः। अनु-

क० ७०
स्त० १
॥ ८ ॥

मानेन चेत्तदप्येतदन्यदेति विकल्पद्वयं भीमधनञ्जयद्वयमिव मध्येजल्पयुद्धं युष्मद्युक्तिदुर्धरदुर्योधनध्वजिनीविध्वंसायोद्धुरं धावति । यद्येतत्तदास्मात्कृतवुद्ध्युत्पादस्तस्माच्चैतदनुमानमिति—"युक्तिजालजलभाजिदुर्द्धरैः, साधनोरुमकरैः करालिते। मज्जयन्नजनि जल्पनीरधौ, लोहनौवदितरेतराश्रयः ॥ २२ ॥" अथान्यत्तदा कामुकमिथुनेनेव मदननन्दनेनेव मत्सरच्छुरितहृज्जनेनेव च सद्दोषाभिष्वङ्गिणा किमनेन क्लीवविकल्पेन, तदेवेह भवता वतावतार्यताम्। यद्वा तेनापि किं. नापितक्षुरेणेव सर्वजनकेशकल्पनपरेण, तत्रापि हेतोः कालात्ययापदिष्टत्वादिदोषाणां सुसाधत्वादिव्यवुधवधूराद्धौदन इव सिद्धः सोऽर्थासिद्धस्तत्र तुरीयभिद्यातुरीतुरीययशोऽङ्कुशव्यूतिसमये सहकृत्वरी शैवकोविदकुविन्दानाम् ४ । हंहो! जल्पाकपाकशासन! सकला अमी विकल्पा मदकलविकल्पकल्पाः कल्पान्तेऽपि नाल्पाया अप्यभिलपितसाध्यसिद्धिसुन्दर्या विलासान्दोलितल्पाः स्युः, ये खल्वास्माकीनस्मेरमनःकम्रकमलाङ्कमधुकरकृतानुकाराः सद्यो दह्यमानकुवाद्युच्चाटोत्कटचटत्काराः कार्यत्वप्रचारास्ते केऽप्यन्य एव वेविद्यन्ते। तत्कुतो रङ्गेण रत्नशङ्काचान्तचेतसा चाकचिक्यप्रकाशकानि काचशकलानीव त्वया तेऽपलप्यन्ते। ननु प्रकटयामस्तानचेतनोपादानत्वमभूतभावित्वं प्रागसतः स्वकारणसत्तासमवाय इत्यादय इति। सत्यं सन्त्यमी अपि तद्भेदाः, परं दुष्टतया नैतेऽपीष्टं दातुमीशते। यतः पूर्वस्तावद्दुःशात्रव इव निशातदेशासिद्धिनिष्कोशासिद्विधाकृतः जगदन्तर्गतदेहिसन्दोहोत्पादुकसंवेदनसमुदायस्याचेतनोपादानत्वाभावात् समवायिकारणं ह्युपादानमुच्यते,

द्धे ह सदो

जल्प- ॥१॥

क० ल०

तच्च सर्वसंविदामात्मैव। न चासावचेतन इति वाच्यं, तस्य चैतन्याभावे पाषाणप्रायतापत्त्या जगति जीवाजीवव्यवस्थाविलोपात् यदि च प्रायः समग्रप्रामाणिकग्रामणीप्रमाणीक्रियमाणे यौष्माकीणमतेऽप्यचेतनश्चित्तया परिणमन्नभ्युपगंस्यते तदा—"भूतानां निचयो विचेतनतयाचान्तोऽपि चञ्चूर्यते, कार्ये सत्यसुत्येतनाप्रलपतां लौकायितानामपि। रङ्गादङ्गमृदङ्गमङ्गलमिलद्धोङ्कारबद्धोद्यमा, नर्त्तिष्यन्ति गृहाङ्गणे युवतयो वर्द्धापनं कुर्वताम् ॥ २३ ॥" नन्वात्मा स्वयमचेतन एव किन्तु चेतनासमवायेन चेतनः स्यात् इति चेत्तर्हि स भवत्वन्यथा यादृशस्तादृशः परं यदा काचित्तस्माचिदुत्पद्यते तदा समेतचेतनादेवेति मन्तव्यं, अन्यथा हि कारणानुगुणं कार्यमिति योऽङ्गीकारः स्यात्तस्य परिहारः। वद च त्वमेव धवलतन्तुव्रातव्यूतं वसनं क्वचन मेचकमचकात्? तन्नाचेतनाचिदुत्पादो न्याय्यस्तन्नायोऽनवद्यः। अभूतभावित्वं चानैकान्तिकताङ्कितं, प्रागुक्ताकाशकार्यतावत्पर्यायरूपेण नित्यपदार्थेष्वपि तद्भावात् उक्तं च—"न च नाशोऽस्ति भावस्य, न चाभावस्य सम्भवः। भावाः कुर्युर्व्ययोत्पादौ, पर्यायेषु गुणेषु च ॥ २४ ॥" तार्तीयीकोऽपि तवार्त्तिं निवर्त्तयितुमियर्त्ति न स्फूर्त्तिं, योगजुषामशेषकर्मक्षये पक्षान्तःपातिनि तस्याप्रवृत्तया पक्षैकदेशासिद्धेः, कर्मक्षयो हि साद्यनन्तत्वेन प्रध्वंसाभावरूपो यदाहुः—"सादिरनन्तः प्रध्वंसाभाव" इति। न च तस्य सत्तास्वकारणयोः समवायोऽस्ति, वस्तुतापत्तेः। अथ कथं निश्चिकयिषेदम्? यदुताभावोऽपि पक्षे न्यक्षेऽपि, नहि कोऽपि प्रविश्य मनो द्रष्टुमीष्टे, तस्माद्भो बहुबुधाकृतबोधबन्धुरबुद्धे! यो रसरहितो भासुरः स एवास्माभिरिह धर्मी निर्मीयते सेति स्मरतामेति

नतरामेष दोषः । सत्यम् । किन्तु विश्वेश्वरो द्विरज्झलोज्झितप्राकृतकुन्तलपर्यायं कुरुते न वा? यद्याद्यस्तदा-
कथमभावोऽपि न पक्षान्तःपातुकः? शङ्करकरणीयसकलकार्याणां पक्षेण निजकुक्षौ निक्षेपणात्, तस्य चाभाव-
रूपत्वात्, द्वितीयश्चेत्तदा भङ्ग इव सर्गोऽपि स्वस्वहेतुभ्य एव भविष्यति तत्को विशेषस्तस्य दृगविषयीकृ-
तस्यापि हेतुत्वकल्पनया । ततः—“गोविन्दोऽनुयुनक्ति मुक्तिगमनेच्छूनां मनः कीदृशं?, संबोधं मतिमोदनस्य
सुधिया पक्षस्य सम्पाद्यते । किंभूतां सुभटः करोत्यरिघटां दान्तमदानाहृता न्यार्थं तद्वद् हेतुरापदियता कां
तावकोऽसिद्धताम् ॥ २५ ॥” प्रश्नोत्तरम् । “अस्ति स्वस्तिकरस्तमस्तिरयिता श्रीनन्दिरत्नो रविस्तत्पादप्रणये
परायणतया कोकायते यः कविः । आद्यस्तत्कृतजल्पकल्पलतया क्रोडीकृतः साधनासिद्ध्याख्यस्तबको बभूव
बहुलामोदः सुधीमण्डनः ॥ २६ ॥” हे अ- सत्ता वर्तते इति से, ह्रस्वे नञ् समासे ऽसि, हे ऽसि द्अप-
क = दकार स्यान्त. क्षेपात्, धतापरार्थं ततः उत्तर वद असिधता दकारस्थाने ऽसिद्धतां । (पद्मापि:)

इति श्रीतपागच्छशृङ्गारयुगोत्तमगुरुश्रीसोमसुन्दरसूरिपट्टपाथोधित्रिपथगाप्रवाहोपमश्रीमुनिसुन्द-
रसूरिश्रीजयचन्द्रसूरिश्रीरत्नशेखरसूरीन्द्रशिष्याणुरत्नमण्डनकृतायां जल्पकल्पलतायां,
मण्डनाङ्कः साधनासिद्धिनामाद्यः स्तबकः ॥ १ ॥

-कन/न रता-

कौशेयांशुकखण्डमण्डितमरुद्धूतक्कणत्किङ्किणि, ब्राह्मीकेलिनिकेतकेतनधृतश्रीः केयमिन्दूज्ज्वला । निर्याति भुवतः कलध्वनिमुनेरेषा मुखाम्भोरुहादस्याद्रोधरविम्बरुक्कबरिता दन्तद्युतां धोरणी ॥ १ ॥ इत्यादिजल्पदवलोककलोककदम्बदर्शनानन्दमुत्पादयन्मुनिपुरन्दरः पुनरिदमुदीरयामास । मा सर्वेषामेकत्र विकल्पजल्पनादुद्वेगो भूदिति भो दक्षप्रतीक्ष्य! कार्यलक्षणपरीक्षणमुपेक्ष्यापि ब्रूमहे । महेशजन्यतां जगतः साधयता त्वया कार्यत्वादित्यत्र कार्यमात्रमभिप्रेतं तद्विशे(षो वा)। शेषो वादी यदीहार्थे स्यात्तदाप्यनयोः पक्षयोरेकमपि कक्षीकुर्वाणो न समर्थः साधयितुं साध्यम् । साध्यन्तःकरणं करोति खल्वादिमः, कार्यमात्रं हि कुलालादितुलालातृकर्तृमात्रस्यैव साधकं स्यात् न तु लोकोत्तरबुद्धिमद्धेतोः, तेन साद्धुं हि तस्य व्याप्तिर्वासवसूरिणापि दुःसाध्र्या(धा), साधारणाच्च साधनादसाधारणसाध्यसिद्धावसदादिर्नित्यमत्यादिमानात्मत्वादीश्वरवदित्यादिप्रयोगादवनिस्पृशामपि नित्यनिखिलार्थनिष्ठज्ञानादिसिद्धिर्दुर्निवारा । वारान्निधेः सेतुनेव तस्याः प्रमाणादिना स्खलना स्यादेवं, न च वचनीयं यं हेतुं भवदभिमतेऽपि प्रमाणादिबाधा दर्शिता दर्शयिष्यते च पुरः । पुरवैरिणं द्विपद्वे मुने! त्वमिदमभ्यधाः, परं यथा विवादाध्यासिता भावाः कस्यचित्प्रत्यक्षाः प्रमेयत्वात्करमौक्तिकवत् इत्यत्र प्रमेयत्वमात्रादशेषवित्पुरुषविशेषो वः सिद्ध्यति, तथा कार्यत्वमात्रादलौकिकबुद्धिमद्धेतोः सिद्धिर्नः कथं न भविता ? । भविता तावदाक्षरमेतद्बुद्ध! साधनाव्याप्तिसाध्यसमव्याप्तिव्यतिरेकव्याप्तिकयोग्यदेशावस्थितत्वोपाधिबाधितत्वात् अप्रयोजकेन प्रमेयत्वहेतुना कार्यत्वहेत्वाभासस्य तुलनादन्धान्धबाहाविलगनन्यायो नावसाक्षरमेतन्बुद्ध सोदाहरण-

॥ १० ॥

न्यञ्चयांचभूवे खल्वेतेन । तेन वाष्पधूमयोः केनचिदंशेन सादृश्येऽपि कुतश्चिद्विशेषाद्धूमो धूमध्वजमवबोधयेन्न वाष्पादिस्तथा पृथिव्यादीतरकार्यत्वयोरपि किञ्चिदन्तरमङ्गीकार्यं मनीषिणा । मनीषितत्तदङ्गीकारे तु–"हेतुः साध्यं गमयितुमलं किन्तु दृष्टान्तवर्ती, न स्याद्यद्वा नृपतिरपि न द्वे विधातुं समर्थः । क्रीडामग्नप्रसृतकरणीन्द्रेषु वातायनेषु, स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥२॥" स(श्र)मस्यामे(मि)षुधिमिव द्वितीयमपीयता युक्तिपृपत्कसुक्तं वादिसुभटो भजेदिष्टजयवैभवः । भवतु वा यथाभवदभिप्रायं हेतुः किं साध्यविपर्ययसाधनाद्विरुद्धतां दधदसौ जायते युष्मद्यशोरजनिजानिदर्शः । निदर्शनीकृतघटानुसारेण तत्कर्तृदृष्टवपुरादिविशेषवन्तं हि विश्वविधातारमसौ प्रत्याययत्यस्मानु । ननु भोस्तपोऽटपेटकटङ्कारितुकीर्त्तिघण्टाकप्रकटतामटत्यवाश्रयालता भवतः केवलकार्यतावशदृष्टान्तीकृतघटनिष्ठकार्यादियुत्कर्तृजन्यतालक्षणान्यधर्मापि पा(मतोपपा)दनेन विरुद्धतां कथयतः । यतः—"वेणिः कृष्टकृपाणवद्यदि तदापद्येत किं भीष्मता ? वक्त्रं पर्वमृगाङ्कवद्यदि तदापद्येत किं श्यामिका ? । तन्व्याः काञ्चनवद्वपुर्यदि तदापद्येत किं ताड्यता ? ॥३॥" गृहीतमुक्ताक्षरजल्पः ॥

दृष्टान्तस्थस्यानिष्टस्य धर्मस्य प्रसञ्जनं चोत्कर्षसमाना जातिरेव स्याद्युक्तम्—"उत्कर्षापकर्षाभ्यां प्रत्यवस्थानमुत्कर्षापकर्षसमे जाती ।" म- २ ...

तत्र यदा वादिना गदितेऽनुमाने प्रतिवादी दृष्टान्तस्य धर्मं कञ्चित्साध्यस्य धर्मिण्यापादयेत्तदो-

---

१ द्वितीयस्तवकारम्भात् । २ असमस्तपदजल्पारम्भ ।

दृष्टान्तस्थस्य प्रतीपस्य, A मां, दृष्टान्तस्थप्रतीपस्य B मां G मां ... पाठ छे.

जल्प- ||११||

त्कर्षसमा जातिः,यथा यदि घटवत्कृतकत्वाद्भङ्गुरः शब्दो घटवदेव मूर्त्तोऽपि भवेत् न चेन्मूर्त्तो घटवद्भङ्गुरोऽपि मा भूदिति शब्देऽन्यं धर्ममुत्कर्षयतीति । सा च दूषणं न भवेत्, किन्तु दूषणवदाभासतेऽतः कामपि शङ्कां नास्माकमुत्पादयेत् । दृष्टान्तेन समं दार्ष्टान्तिकस्य च यदि समग्रं साम्यं गवेष्यते तर्हि सर्वत्र हेतूनां विसंवादितैव स्याद्, इति चेत्, ब्रूहि बहुशः शोभना भणितीः । परमसौ दोषाणामाकरो न हेतुर्भविता, न हि रासभस्ताडितस्तुरङ्गतां दुग्धेन क्षालितो मौकुलिः कलहंसतां वा कलयेत् । कुतः इति चेत् तदाकर्ण्यतां, नर्त्तक्येव रसनया मण्डपं विडम्बयितरि तुण्डे वितण्डायास्ताण्डवं मण्डितवतां जडानां तावदेतदेव पल्लवनं, यद् जातीयानां जल्पनं न तु मौक्तिकानां शुक्तय इव यशसां प्रसविन्यो युक्तयः । कः खलु जाम्बूनदस्य भल्लीं जम्बाले क्षिपेत्? सा तु चोत्कर्षसमाया जातेः स प्रयोगावासायावासायते, यत्र साध्यं श्लिष्टं, ततः सा तत्र स्वैरं कथं न प्रसरमासादयेत् । वरं सा प्रसरिसतुंयदि श्लिष्टं साध्यं स्यात् अत्र तु स्वप्नेऽपि तन्नास्तीति चेन्न, पक्षे नित्यत्वे सति सर्वमश्नुवानायाः सपक्षे च ततो विपरीताया बुद्धेराश्रयस्य कर्तुर्विचक्षणेन साध्ये सुपरिश्लेषस्य दर्शनात् । ननु कश्चित्कमप्याख्यद् यदुत तव माता मे मात्रा श्मशाने दृष्टा, तदान्येनोक्तम्—तर्हि तेऽपि तत्र माता न लक्षणवती या तत्र यायादित्युपाख्यानेन वितण्डां वितन्वान इव न जातिं प्रयुञ्जानोऽपि जनो जानन्तरो जल्पनीयः इति चेत्, तदस्माकं प्रियम्भावुकं, परमस्माभिः सूनृत एव दोष उद्घुष्यते न तु जातिः,जगतो बुद्धिमता हेतुना कृतत्वे सिद्ध्यति सति बुद्धेः कायस्य नियतमपेक्षणेन तद्वतो

कृतकत्वे A

क० ल... -यु ... स्त० २ ||११||

हेतोरवश्यं शरीरितायाः सिद्धेः। कृतका मतिः कायमपेक्षते न तु नित्येति चेत्, तदास्माकं वागुरावत् गरीयसि गिरां गुम्फे कुरङ्गपातं पतितोऽसि, यतः सर्गे योपयोगिनी गिरीशस्य गीः सा कृतकैव प्रपद्यते धूर्जटीयैः, जायदीति च तथैव। इत्यागच्छदिच्छां विनापि शरीरितायाः स्वीकारः। अथ मतमवमत्य नित्यया मत्या निर्मात्यसौ विश्वमित्यभिधत्से, तदपि मोघतामातेष्टिधीति, तस्या एकतया स्वीकरणात्त(णात्त)या कृत्वा कृतानां कार्याणामप्येकतायाः प्रसक्तेः, घटस्य धिया क्रियमाणो हि घट एवोत्पद्यते न तु पटः। किञ्च नित्यायां बुद्धौ सम्बन्धस्याभावेन, कथमुपनमतु मतुः प्रत्ययः?। यदि अस्ति सम्बन्धस्तदा स किं संयोगः समवायो वा? इति भेदयोः प्रमदायाः पयोधरयोरिव यामलं सुधियामलं मनः क्षोभयितुं सम्पनीपद्यते। असमस्तपदजल्पः।

तत्राद्यो वैफल्यः काशकुसुमसङ्काशः प्रकाशते। स्त्रीपुंसयोरिव द्रव्ययोरेव संयोगो(गा)ऽभ्युपगतेः। धीस्तु गुणत्वाद्गुस्तेन समवैति न तु संयुज्यते। द्वितीयस्तर्हि बर्हिणायतां मनोवन इति चेन्न। समवायोऽपि यतो(न)ऽयुतसिद्धानामभ्युपगम्यते। अयुतसिद्धिश्च देशकालस्वरूपेषु कस्यैक्येन। न तावत् देशैक्यतः शक्यते सा घटयितुं केनापि। नहि य एव तन्तूनां कालः स एव चीवरस्यापि। तथात्वे कार्यकारणभावः केन सुधिया सुसाधः। कारणेन हि कार्यमन्यतः सिद्धं सत्तुल्यकालं स्यात्। सिद्धोपस्थायि च कथं कारणं प्रागेव कार्यसिद्धेः?। स्वरूपैकत्वे तु द्वयोरप्यैक्यात्किं कुत्र समवैतु। तन्नायुतसिद्धेरसिद्ध्याऽसॅश्चित्समवायो विद्यते। भावे वा विभुते-

१ तत्र यदेत्यतआरभ्य। २ पतत्यक्षरं।

आकाशैकतस्तु सर्वेषामेकदेशत्वमापद्येत। न च तदेकदेशत्वं नभसो निर्देशता स्वीकृतेः। पत्या दिवनस्य देश कस्य (स्य ?) न्त इति चेत्तदुक्तम्। कल्पितानां द्वयस्तुत्वेऽयुतसिद्धिः कथं स्या-

घ्याभ्यां कुलालेपि मेलिततद्धीः स्यात्। नन्वनित्या धीर्यो यस्य सा तस्यैवेति कुतोऽनियता। तादात्म्यसम्बन्धाद्या यत्रोत्पेदे सा तस्यैवेति ब्रूमः। न चात्मैकान्तनित्यो येनं तदात्मतया धीर्नोद्भवेत्। ततो बुद्धिमद्धेतोः कृतकैव धीरभ्युपगन्तव्या। तया चाङ्गसिद्धौ तत्कुलालाभतासिद्धेर्विरुद्धोऽयम्। समसंख्याक्षरवाक्यजल्पः। (अष्टादशाक्षरीयः) ॥

एतेन ननु भोस्तपोऽटेत्यादि यज्जगदे तच्छङ्कामुत्पादयेदित्यन्तमुचिच्छिदे। अथ दृष्टान्तदार्ष्टान्तिकेति यद्भाणि, तदपि न प्रामाणिकप्रीतिविश्राणि। यतो यादृशात्कारणाद्यादृशं कार्यं दृष्टं, तादृशादेव तादृशं अनुमीयमानं तार्किकेष्टं। यथा यावद्धर्माद्वह्नेर्यावद्धर्मात्मकस्य धूमस्योत्पत्तिः सुदृढप्रमाणात्प्रतिपन्ना, तादृशादेव धूमाच्छैलादौ तादृशमेव कृशानुमनुमि(म)ते प्रमाणविज्ञा। घटादिकं च दृश्यविशेषाधाराद्दृष्टमुत्पेदानं, ततो वसुधाद्युत्पादस्यापि तादृशादेव कर्त्तव्यमनुमानम्। नत्वदृश्यविशेषस्फीतेः, ततः स्वप्नेऽप्यप्रतीतेः। न चैतावतोदाहार्योदाहरणैः समग्रसाधर्म्यान्वेषणं, येन जायेत नः सकलहेत्वनुपपत्तिदूषणम्। तदेवम्—"त्वदरिमधुपनीपप्रायसाध्यप्रतीप—प्रथनुपटुभयेद्धः स्पष्टदृष्टो विरुद्धः। तवकृतयविलोक्योत्सर्पिकल्लोलजल्प—जलजलनिधिसेतुः स्यात्कथं सैष हेतुः ॥ ४ ॥" नियतानुप्रासजल्पः ॥ कथयविकल्पोत्स १॥,

तथा भोः कुवादिगजपारीन्द्राः! पार्थादिव रवितनुभुवा समवतीर्णेन सङ्गरे हेतुनामुना प्रसरद्द्युतिप्रपत्कौघेनापि व्यभिचारादवाप्यते गरीयानवश्यमनवश्यमनर्थः। अकृष्टप्रभवैर्वनवनस्पतिभिर्विपक्षभूतैरप्युपात्त-

त्वात् । कार्याः किल ये भावास्ते द्वेधोपलभ्यन्ते । केचिद्धीमता जनिताः कुम्भगवाक्षाग्रतःसराः । केऽपि च तद्विपरीतास्तृणतरुप्रभृतयः । तेषां पक्षीकारादव्यभिचारौकस्त्वमेवं चेत् तदेदं पाथो रेखायते सर्वत्र व्यभिचारविपयस्य पक्षगतीकर्त्तुं शक्यत्वेनाप्यव्यभिचारतया मेघादि क्षणनश्वरं सत्त्वाद्विद्युद्वदित्यादिप्रयोगप्रकारौघस्यापि साधकत्वानुपङ्गात् ॥ गुप्त(रघुप्रथम)श्लोकजल्पः ॥

अथ तत्रापि तपस्यमानमस्तक इव चक्षुरगोचरीकृतः शङ्कर एव रचयितेति चेत्, घटेऽपि स एवादृश्यः पिपासितपान्थपङ्क्तिरिव कर्त्तोऽस्तु न कुलालः । तथा च कथं तद्दृष्टान्तेन सुजातंसुतस्येवातिमात्रेहितस्य(तस्य:) कर्त्तुः सिद्धिः । कुलालं कुरुक्षेत्रमिव कुर्वन्तमनेकशो विलोकितवन्तः कथमपरं कल्पयामः? इति चेत्, तदा दृष्टकर्तृकाणां शङ्करेणाऽकरणात्कथं येन जघटे जगदिति गीः सुघटा? घटास्थानीव सारकासार इव स नोदकः संस्तेपां कर्त्ताऽन्येषां च मुख्यतयेति चेन्न, स हि यदि समर्थस्तर्हि धनवानिव सर्वं स्वेन कुर्यात्, यदि वा श्रुतदेवत्तेवेशानस्तदा घटादीनिव पर्वतादीनपि कैश्चित्कारयेत्, नो चेत् सामर्थ्यैश्वर्ययोरेकतराभावः सुवैदणवयोरिव स्यात्, अथ कृपणानिव स्वतः समुद्भवतस्तानपि नोदयेच्चेत् तदानीमन्यथाभवदुत्पादतयापनिद्रनेत्राणामिवाऽस्वापेक्षिणामपि विष्टपतिष्ठत्पदार्थानां नोदनां विदधानः स नोन्मत्तादतिरिच्यते ॥ श्लेपजल्पः ॥

किञ्च-ईदृकिरीटस्यानयोरगोचरचारितायां किमस्याभावो विद्यादिप्रभावोऽस्मदाद्येतद्वैगुण्यं दवीयस्तादि वेत्येतावन्तो विकल्पाः कीर्त्तिकन्येदमित्थंकरणसमये चतुर्भङ्गलतुलामङ्गीकुर्वते । तेषु प्रथमे तावदीदृगा-

जल्प-
मेच-A
॥ १२ ॥



कारशिलासीनात्मन इव तस्य तन्वभावे कर्तृत्वानुपपत्तिरियं हेतुदोषाणामन्तिमस्य प्रस्तावे विस्तारयिष्यते। अनादिमे च किमा(किं मा)नमश्नन्मुखं मयूखेनेत्थंकृतमिव तव स्यात्, यदि हि विद्यादिप्रभावादनिभाल्यताभागसौ भवेत्तर्हि कापि कस्यापि दृग्मार्गमागच्छेत्, न खलु विद्यादिशालिनः शाश्वतिकमदृश्यत्वं ददृशे पिशाचादिवत्। तृतीयः सबलकालप्रियाकोशेत्थंकृतिन्यायप्रत्यायनीयः, सर्वजनादृष्ट (नदृष्टि)वैगुण्यस्य प्रत्यायनायान्यप्रकाराभावात्। चरमोऽपि न चिद्रूपाणामेतद्रूपतामरसमीदृशं कुरुते, अदृश्यत्वं हि दवीयस्तादेरियद्विधाच्छिष्टैरुपदिष्टं, यदाहुः—"अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्। सौक्ष्म्याद् व्यवधानादभिभवात् समानाभिहाराच्च ॥ ५ ॥" तस्य च व्यापकृत्वादिनाऽदृश्यत्वे नैतेष्वेकमपि कारणं सम्भवेत्—"एतावन्नयनस्य विश्वजनताऽनालोक्यता सङ्गतिं, नागच्छन्त्य(त्य)पि तावकादविरताधीताऽनघच्छन्दसः। एतस्मात्पतति स निःसयहृदस्तेन प्रपन्ना वयं, सस्तां पत्तनकण्टकाशनशकृद्गोलाऽशनन्यायतः ॥ ६ ॥" करपल्लवीजल्पः ॥

स्त्वादिभि-A

किन्तु वपुरभावेऽपि या धूर्जटेर्जगतः प्रक्रिया, तया बोभूयते बुधमनोवृत्तिः सविस्मया। यतः सा किं प्रयोजनवत्तया कर्मप्रेरणया यदि वा तादृक्षस्वभावतया? इति भिदात्रयं दात्रयन्नायते कुमतवल्लिवनलवनाय प्रयुक्तं मया। तेषु प्रथमे(तासु प्रथमायां) कथं न हानिः कृतकृत्यतायाः? प्रयोजनमुद्दिश्य तस्य जगज्जनने तत्परतायाः। अन्यथा तु न तस्य प्रवृत्तिः प्रेक्षापूर्वकताकमनीया।—"प्रेक्षावतां यतो वृत्तिर्व्याप्ताऽऽस्ते कार्यवत्तया। प्रवर्तेत विनार्थं

न, सोऽपि यद्वीः स्तनन्धयी ॥७॥" किञ्च–प्रयोजनेनापि तस्य भाव्यं करुणया, क्रीडयाऽथवा निग्रहानुग्रहविधि
न, सोऽपि यद्वीः स्तनन्धयी ॥ ८ ॥" कामनु-
त्सया ।—"तेषु त्रिषु त्रिनेत्रस्य, कृपया यदि तत्क्रिया। सृजेत्तच्छुभमेवेदं, भुवनं नोदितस्तया ॥ ८ ॥" कामनु-
रूपां च सूचयति च्छागपुरोगाणां पुरीषादेर्वर्तुलीक्रिया। तन्न तत्करणे कारणं कणिकापि करुणायाः। अभिधास्यते
भिद्वितीया, सा वेगवदापगापूरप्लाव्यमानमानवकुशकाशावलम्बनप्राया। डिम्भस्येव हि क्रीडासु वर्त्तने तस्य
जायेतार्यता सव्यपाया। अपरं च यत्तस्य पूर्यते रसः क्रीडायाः। सम्पद्यन्ते च प्राणान्ताः प्राणिनामपायाः।
तदपनयति सिन्धुरः स्कन्धस्य कण्डूयां, पतति च मन्दिरं यातयामायः। नापि तृतीया विधाऽभिधानीया।
स हि यदि निग्रहानुग्रहौ करोतीश्वरतया। तर्हि रागद्वेषोदयेन संसारसागरे मज्जनाज्जायते सदृशीकृतास्त्र्याः
न्याः तायाः तद्वः प्रयोजनपक्षो दुःसाधसाध्याऽसाधनप्रथयाः। वाक्यान्तवर्णैक्यजल्पः ॥

अथ कर्मप्रेरणयेत्यङ्गीकुरुषे। तदार्बुदाऽसारकोरदोपकरणन्यायेन कर्मणामेवेशत्वमुपकुरुते। ननु
तेषां तदायत्तोत्पत्तिकतया कथमिदं व्याकुरुषे? मैवं, यदि ह्यसौ कर्माणि कुरुते। हन्त तर्हि सर्वेषामपि शुभा-
न्येव कुर्यात्, परोपकारैकव्रतत्वादुत्तमानाम्। अथ न भूपो भृत्येभ्यः कर्त्तव्यानुरूपं फलं कुर्वाणः स्वस्यो-
त्तमतामपाकरोति, एवं शुभाशुभकृतानुसारेण प्राणिनां कर्माणि कुर्वन्नपर्णापतिरपीति चेत्? कृतं काचपिच्येन,
भूपतिश्च समर्थश्चेत्, (साहि यदङ्गीकरोति सामर्थ्यं तर्हि) सर्वैः शुभमेव कारयेत्। नो चेदवश्यमसामर्थ्यमसा-

१ यालक्षण ।

धुतां वा स्वीकुर्वीत। चरमोऽपि दुःखाचरीकर्त्ति वः, तदीयस्वभावस्य नित्यैकतया सर्गसंहारयोश्च परस्परविरुद्धतयैकतरस्यैव करणापत्तेः। अन्यथा तयोरेकतां स्वभावस्य भिन्नतां वा गलेपादिकयापि त्वमं(गी)कारिप्येत। तन्न वनस्पत्यादीनपि स एव करोतीति प्रतीतिकरम्। वनतर्वादेरपि तेनैव करणं चमदचीकरचतुरचेतः—

"शस्येतराऽतः करवीरमालानुकारिणीयं व्यभिचारवत्ता। परासनार्थं(य) प्रगुणीकृतं ते, पर्यस्क रोत्तस्करतुल्यहेतुम् ॥ ९ ॥" एतेनाग्नेरनुष्णत्वे साध्ये द्रव्यत्ववत् कालात्ययापदिष्टतयापि हेतुमवचेक्रीयते चतुरचक्रम्। वनवनस्पत्यादावाबालगोपालं कर्तुरसाक्षाचरिक्रियमाणत्वात्। असदृशस्य तस्य च कर्तृतायाः पराचकृवत्त्वात्। ततः—"चेतो वः कमलाकरोति किमिह प्रश्नोत्तरे के वद(व्याकुरु)प्राक् पुण्यापगमेन का किमकरोल्लक्ष्मीवतोऽप्यालये। श्रीरामस्य समागमोऽवनिभुवा लङ्कास्थया किं कृतस्त्वद्धेतुः क्रियते स्म काननवनस्पत्यादिभिः कीदृशः ॥ १० ॥" (कालात्ययापदिष्टः) ॥ कृगधातुजल्पः ॥

अथ कथमथर्वेव निर्वेदकोऽरण्यभण्यताम्वरीभर्तुर्हेतुर्न भावत्कः, तत्कालप्रतिकूलसाधकहेत्वन्तरतुरगवेगोपढौकितप्रौढप्रकरणसमतानिर्मिथोन्माथत्वात्तथाहि—गिरीशो नेच्छाकारी, अशरीरित्वाद्, योऽशरीरी स नेच्छाकारी यथा संसारपारीणः, अशरीरी चोररीचरीकरांचक्राणो गिरीशः, तस्मान्नेच्छाकारी इति प्रतियोगः शङ्करसकाशात्रिलोकेच्छाकारित्वं वकदलनदन्तावलोदसनलीलयोदलीललत्। आः साधु साधुषु धुरन्धरोवादिसिन्धुरमदग्रासमधुकरो भवानिदमवम्भणीत्। गिरिशं नः स्वामिनमिह धर्मिणं निर्मिमाणस्य तवापि तद-

भ्युपगमावश्यकरणीयत्वात्, इतरथा साहसाङ्कविवेकावासितकेवलकविनिकेतबन्धुरायां धारायां कवि-
ताविकलस्येव हेतोराश्रयासिद्धिर्वोभूयादिति चेत्, तदविचारितं चारुतां चञ्चुरीति । न खल्वभ्युपगम्य-
मान एव धर्मीति मतिमतामेकान्तो वरीवर्त्ति । तमोऽभावरूपतासाधनादावनभ्युपगतस्यापि तमःप्रमुख-
धर्मिणः प्रयोगात् । हेत्वाश्रयासिद्धता तु प्राय उभयत्रापि तुल्याक्षेपोत्तरा वेत्त्ति । न च वयमीश्वरं नाभ्यु-
पजग्मः । ततो यूयं यमभिमंमनामासिवांस ईश्वरं, स किलेन्दुकलाकालीकपालादिविकलतासकलवि(प)-
त्तादिस्वरूपः परमात्मैव । तं च सुपरिप्रतिजाज्ञति जैना अपि ।(नच)विवावर्ध्यन्ते नो। पुनस्तत्रासम्भविनो
भुवनविधानादिकियद्धर्मा एव । तत् कथमयमाश्रयासिद्धतामाशेश्रीयात् ॥ चेक्रीयितक्रियाजल्पः ॥

ननु विद्यमानेऽपि वपुषि ज्ञानेच्छाप्रयत्नानां समस्तानां व्यस्तानां वाऽभावे कुम्भकारादावपि कर्त्तृतां नोप-
लम्भगोचरयामः । तेनादौ कार्योत्पादककारणकलापाकलनं, ततः करणेच्छा, तदनु प्रयत्नस्तदनन्तरं फलनि-
ष्पत्तिरित्यमीषां त्रयाणामेव कार्यकर्त्तृत्वे सर्वत्राव्यभिचारात्कर्तृत्वसामग्र्यामङ्गमनुपयोगितयाऽजागलस्तना-
यते । तत्कुतोऽशरीरित्वहेतुमन्वयव्यतिरेकाघटनया कृटमप्रचकट इति चेत्, मुशलाग्रधियः कुशला ईदृग्गिरा
शृङ्गारयन्ति स्वजिह्वां नतु कुशाग्रधियः । यतो हन्त हे तार्किकंमन्य ! विना देहं तस्य ज्ञानादयो वन्ध्या-
स्तनन्धयायन्ते, तेषामुत्पत्तावस्य मुख्यनिमित्तकारणत्वात्, अन्यथा मुक्तात्मन्यपि कस्तानुत्पद्यमानानर्ग-
लयेत् । अथ प्रमथनाथः प्रथमं स्वं वपुषा सनाथ इति पश्चात्तेन सहकारिणा जगत्कर्तुमोङ्कारयतीत्ये-

सनाथयति २५१

तावता किं चक्रं नो मनो मन्दाक्षयेतेति चेत्, वपुरभावे स्वयं वपुरकरणं तत्करणायापरपरमेशकल्पनाऽनवस्थापारवश्यमित्यादि तदित्युत्तरयामः। ननु भोः! क्षुल्लकमतल्लिकागल्लफुल्लिकाभिर्लोकहल्लोचनानि चिराय चित्रीयन्ताम्। परं कृतार्थत्वोपाधिबाधितत्वेन व्याप्यत्वासिद्धतां यातो हेतुरयं साध्यविपर्ययं साधयितुं कथमोजायिष्येते? सत्यमेतत्, तथापि व्याप्यत्वासिद्धतोपाध्योः किं लक्षणं कमलीयते हृदयनालीके? येन तौ सिद्धपुरुपाश्लिष्यमाणानलीकव्याप्तिपाञ्चालीकमनीये मदनुमानहर्म्यैकहेतुहरिचन्दनस्तम्भे कटरि काष्ठकीटायेते ॥ नामधातुजल्पः ॥

हन्तेदं तत्तथाहि-दृष्टान्तप्रभवेनोपाधिना बाधितो हेतुरप्रयोजकापरपर्यायो व्याप्यत्वासिद्धः १, साधनाव्यापकः साध्यसमव्याप्तिरुपाधिः, यथा—पृथिव्यादि सकर्तृकं, कार्यत्वाद्, घटवदित्युक्ते शरीरिजन्यत्वं २, हेतौ सत्युपाधेरभावः साधनाव्याप्तिस्तत्र दृष्टान्तः पक्षः ३, साध्योपाध्योरन्योऽन्यव्यापकत्वे साध्यसमव्याप्तिस्तत्र सपक्षः ४, उपाध्यभावे साध्यभावो व्यतिरेकव्याप्तिस्तत्र विपक्षः ५, स एव च तदाभासो यदि व्यतिरेके प्रत्युपाधिर्यथा अस्यैव यच्छरीर्यजन्यं तदकर्तृकं यथा व्योमेत्युक्तेऽकार्यत्वं ६, उपाधिलक्षणं भो विचक्षणवरेण्य! क्षतक्षुण्णमेव न्यक्षमेतल्लक्षणं, परमकृतार्थत्वं कथमुपाधिः? अशरीरित्वे सत्यकृतार्थस्य कस्याप्यभावेन साधनाव्याप्तौ निदर्शनादर्शनात्, ईश्वरस्य तु विश्वरचनातः क्रीडाद्येकतरार्थकल्पनयाऽकृतार्थत्वेऽस्मदादेरिव शरीरित्वादिप्रसङ्गोऽनर्गलः। न च तत्कल्पना न्याय्या, प्रागेव तन्निरासस्य प्रतिपादनात्। ये

[Left margin notes:] १ कुं A जल्प- ॥ १५ ॥ ४ साध्य- A
[Footnote:] शरीरित्वप्र- A
[Right margin notes:] क० ल० स्त० २ २७। ... ॥ १५ ॥ कृता-

चान्ये जगति चेतनास्तेऽकृतार्थाः परं भोगायतनभाज एव । अचेतनास्तु तदभावेऽपि नाकृतार्थाः । कृतार्थाकृ-
तार्थत्वयोरजडस्यैव धर्मत्वात्, तत्रोपाधिबाधया व्याप्यत्वासिद्धोऽयम् ॥ गम्यास्तिजल्पः ॥

ततः—"दुष्टोपाधिविधिन्तुदा विधुरितो दुर्युक्तिभूर्युक्तिभूच्छायच्छिद्रवदुरुहेतुशशिनस्तेजोधुनानोऽधुना ।
विद्वन्मानसनीरजन्मसुकृतोल्लासस्तदभ्यन्तरे, हेले हेलितुलां वहेत न कथं हेतुर्महेच्छो मम ? ॥ ११ ॥
एवं च पञ्चतयदोषविशेषदुष्टाद्धेतोरतो (ऽ) गिरिशविश्वविधानसिद्धिः । यां तावके मनसि तिष्ठति कामना
सा, नारी नपुंसकपतिप्रसवस्पृहाभा ॥ १२ ॥ अस्ति स्वस्तिकरस्तमस्तिरयिता श्रीनन्दिरत्नो रविस्तत्पाद-
प्रणये परायणतया कोकायते यः कविः । श्लिष्टस्तत्कृतजल्पकल्पलतया शेषाब्धिसंख्योदयद्दोषाख्य स्त-
वको बभूव सुधियामार्येतरो मण्डनम् ॥ १३ ॥

इति श्रीतपागच्छशृङ्गारयुगोत्तमगुरुश्रीसोमसुन्दरसूरिपट्टपाथोधित्रिपथगाप्रवाहोपमश्रीमुनिसुन्द-
रसूरिश्रीजयचन्द्रसूरिश्रीरत्नशेखरसूरीन्द्रशिष्याणुरत्नमण्डनकृतायां जल्पकल्पलतायां
मण्डनाङ्कः शेषहेतुचतुर्दोषोदयो नाम द्वितीयः स्तबकः ॥ २ ॥

---

अथ दूषितसाधनस्तपोधनरत्नं स चिरत्नधीनिधिः । कृतसाध्यनिरासवासनः, पुनराख्यज्जनराजिरञ्जनः ॥ १ ॥ ननु भोस्तर्करहस्याम्भोरुहोल्लासहेलयः ! हीयतां हेतुरेष दर्पणनिर्विशेषः, सन्ति साधनरत्नानि भूयांस्यपि तर्करत्नाकरे, परं यस्तेन परिचरिस्त्रियते पक्षपुरुषः, स एव निर्णिज्यताम् । अशुद्धे हि धर्मिण्याधीयमानं साधीयोऽपि साधनमयोमुद्रिकायां माणिक्यमिव न किञ्चिचकास्ति । ततो यदुदीरांबभूवे—भूधरधरादयो बुद्धिमद्धेतुका इत्यत्र त्वन्मनस्येको धीमद्धेतुरास्तेऽनेके वा? बहूनां विश्वविधातृत्वे परस्परविमतेरनिवार्यतयैकैकस्य वस्तुनोऽन्या(ना)न्यरूपेण निर्माणे सर्वमसमञ्जसं स्यादित्येकमेव तं वावश्यामहे । तर्हि मधुच्छत्रशक्रमूर्द्धप्रासादप्रभृतयोऽनेकसरघाकीटिकाशिल्पिकल्पितत्वेऽप्येकरूपतया सम्यगवभान्तीति नैष मुनिरिव मनीषिमनोवृत्तिवनितां निंस्ते विकल्पः । अथानेके ? दायते तदायमेकत्वाभ्युपगमो भवताम् । अपरं च—ते सर्वेऽप्येकमेव यदि जगद्विदधते तदा समुदितीभूय कार्यकारितया कथमीशाः आक्लशायन्ते । अथ पृथक्पृथक्तदा, जगदानैक्यादयो दोषाः प्रसूयन्ते । तन्नैकं शङ्करं शिष्येभ्यः शासिपीष्ठाः ॥ अदादिक्रियाजल्पः ॥

यच्च त्वं गीः कलम्बैकलव्यायमानो धीमद्धेतुं विश्वव्यापकतया मन्यसे, तदप्यनुपलब्धिश्रद्धेयं मानसे मनु । छैत्रम् । यतस्तस्य तथात्वे विश्वगतानियतदेशस्थवस्तूनां यथावन्निर्माणानुपपत्तिरेव कारणतामेत्यनूनाम् । धनुः । तत्र च पृच्छामो, जनवत्तनुव्यापारतः संकल्पमात्राद्वा जनयेदर्थांस्त्रिजगतः । मुशलम् । आद्ये एकस्यैव गिर्यादेः कृतौ

१ त्रिमुन्यसमाससमासशब्दानुशासनप्रणयनप्रसिद्धशब्दानुशासनाचार्यपदवीकश्रीहेमाचार्यमते ह्वादिरप्यदायन्तर्गण इति न प्रकरणविरोधः । २ कृत्वा यङ्लुबन्त कर्मणि प्रयोगोऽय, तथा च नादादित्वविरोधो, यतो यङ्लुबदादौ पठ्यते । ३ छत्रादिचित्रविन्यासास्तु ग्रन्थान्ते द्रष्टव्याः ।

पक्षोः कालक्षेपस्य संभवाद्दहीयसाऽपि कालेन न सर्गावसायः । भल्लः । न च तस्य स्याद्वपुः, पुरा मे ततयुक्त्यास्य प्रतिषेधनेन । वज्रम् । द्वैतीयीकपक्षे तु दोषो न कश्चिद्, असौ ह्यन्यनाकसद्वत् सङ्कल्पात्तान् करोति, तयोररीकरणे त्वस्य व्यापकता व्यर्था । जलकमलम् । सर्वगत्वे च सोऽशुचिषु सर्वदुःखेषु श्वभ्रादिषु सञ्चरिष्णुः प्रसज्येत,.तथानिष्टं वः । स्थलकमलम् ॥ चित्रवैचित्र्यजल्पः ॥

अथ सर्वज्ञत्वाभावे यथोचितोपादानकारणाद्यनभिज्ञतयाऽनुरूपकार्योत्पत्तिर्न स्यादितिहेतोः संविदात्मना विष्टपव्यापकः सोऽभ्युपगम्यते । तदाऽस्माकमपि निरतिशयसंविदात्मना परमपुरुषो विश्वत्रयं क्रोडीकरोतीति भवतां सिद्धसाध्यतापद्यते । ननु ज्ञानात्मनापि विश्वव्यापनेऽशुचिरसास्वादादीनामप्युपलम्भः सम्भवतीति युष्माकमप्यजनिष्ट प्रकृष्टमनिष्टम् । नन्वेकस्याः खल्वीपाया व(यि)नि द्वितीया स्वयमेव व्यूयतयेति न्यायात्तुल्याभ्युपगमतयास्माकमप्रियं तव निरुपाधि प्रथममापतेत् । ज्ञानं चास्मन्मते अप्राप्यकारितया स्वस्थानस्थमेव विषयं परिच्छिनत्तीत्यशुच्यादिषु तदप्राप्तेरेतदप्रियं प्राप्यकारिज्ञानवादिनां परेषामेव शीर्षे पतेत् । किञ्च अशुचिज्ञानमात्रेण तद्रसास्वादानुभूतौ दामदुकूलेन्दुवदनाचन्दनादिचिन्तनमात्रादेव देहिनस्तत्सुखमनुभविष्यतीति तदवाप्तिप्रयत्नस्तेषां मोघतामश्नुते ॥ संहितवाक्यद्वयजल्पः ॥

विन्नाणं निअणेअवत्थुविसरं गंतूण नूणंतरा, वाणो वेरिगणं रणंमिव परिच्छिंदेइ एवं पुणो । तुम्हाणं वयणं मणावि न मणं पीणेइ तस्सप्पणो, धम्मत्तेण हु निग्गमो कह वोहिं सुक्खाइआणंपि व? ॥२॥ तस्स य निस्स-

णि २८१

रणे जीवस्सावस्समचेअणत्तणाओ अजीवयावत्ती हवइ। अह—पचूसावसरे गुणा वि र(वि)णो तेणेव कोडीकया, वीसुं वित्थरिऊण किं न किरणा भासिंति भूमंडलं.। एवं अप्पसगासपत्तपसरं नाणंपि नाणापयत्थाणं फासिअ पायडेइ पडलं ता वुत्तदोसो कहं? ॥ ३ ॥ एअंपि अविआरिज्जमाणरमणिज्जं, किरणाण गुणत्तणासिद्धीइ धम्मिणो समीवाओ धम्मस्स दूरवित्थरणे अवरदिहंताऽदरिसणाओ, तप्पभिइणो खलु तेउपमुहपुग्गलमयत्तेण दव्वं चेवावज्जंति, जो पुण किरणाण पगासरूवो गुणो सो तेहिंतो कयावि न पिहू होइ। तहाय धम्मसंगहणीए सिरिहरिभद्दाग्ररियपाया—"किरणा गुणा न दव्वं, तेसि पयासो गुणो नया दव्वो। जं नाणं आयगुणो, कहमदव्वो स अण्णत्थ ॥४॥-लोहोवलस्स सत्ती, आयत्था चेव भिन्नदेसंपि। लोहं आगरिसंती, दीसइ इह कज्जपचक्खा ॥ ५ ॥ एवमिह नाणसत्ती, आयत्था चेव हंदि लोगंतं। जइ परिछिंदइ सम्मं, को णु विरोहो भवे तत्थ ॥ ६ ॥" तम्हा पडिहरिणो रहंगं व पइपउत्तं दूसणं तुह चेव लग्गं ॥ प्राकृतजल्पः ॥

किञ्च-तत्सार्वज्ञ्यं केन प्रमाणेन गृहीतम्? अनुमानेन चेत्, किं तेनाविनाभूतं साधनं? यदनुमानमुत्थापयेत्, विष्टपवैचित्र्यमेव चेत्, न, तस्य शुभाशुभकर्मविपाकादिवशेनोत्पद्यमानत्वात्, तन्न ज्ञानात्मनापि विश्वविभुः। प्रयोगोऽत्र 'शर्वो, न सर्ववेदी, विसंवाद्यर्थवादित्वाद्, युष्मदादिवत्' तेन प्रणीतेषु तत्त्वेष्वाद्यस्य द्रव्यस्यैव तावत्तदुक्तनवसंख्याकत्वव्यभिचारतो नायमसिद्धः स्याद्धेतुः। ननु कथमिदमिति चेत्, एते वदामः 'भूज-

लानलानिलाकाशकालात्मदिग्मनांसि' (इति) नव द्रव्याणि, तत्र न भूजलतेजोवायवः पृथग् द्रव्यम्, अणूनामेव
त्वेन भेदमभेजुषां प्रयोगविश्रसाभ्यां पृथिव्यादित्वेन परिणमनात्, नचावस्थाभेदाद्द्रव्यभेदः समीचीनः, कुम्भा-
शवस्थापन्नमृदादिद्रव्यस्यापि भेदापत्त्यानन्तद्रव्यप्रसक्तेः । नापि दिक्, तस्या व्योमावयवत्वेन तत्पृथक्त्वा-
नुपपत्तेः । अन्यच्च तमश्छायादयोऽप्यतदोऽन्तर्भवद्द्रव्यीभवन्ति तेषामपि रूपादिमत्त्वेन पृथिव्यादिवद् द्रव्य-
त्वासेः ॥ जलपद्मजल्पः ॥

तथाहि—"धत्तेऽमोघसुदर्शनप्रसरतामन्यद्वितं तन्यते, सत्यादिव्रजवाञ्छितानि बिभृतेऽवश्यं महोपा-
स्यता। यद्यातीवतरां जने जनयति श्रीनन्दनस्योदयं, तत्कस्तार्किकपुङ्गवो न गणयेत्कृष्णैकरूपं तमः ॥ ८ ॥"
तद्य मेधाविमूर्धावधि सम्यगवगम्यमानश्यामरूपात्मकतया जलज्वलनवायुवियत्कालकाष्ठात्ममनोऽष्टके
गन्धवैधुर्येण वसुधायां चानन्तर्भवत् क्रियाः पञ्चापि प्रपञ्चयच्च द्रव्यान्तरमवतिष्ठते। ननु भो दम्भोज्झितहृ-
दम्भोजिनीवल्लभ! वद सद्युतिप्रतिभतया समयमियन्तं युक्तिमयमाख्याय त्वयि(या)थेदं कथयता स्वस्य निर्ग्र-
न्थतायाः प्रवृत्यांबभूवे द्वितीयोऽर्थः—तमो न रूपवत्, अस्पर्शवत्त्वात्, यद्यदस्पर्शवत्तत्तन्न रूपवत्, यथाऽऽकाशं,
अस्पर्शवच्च तमस्तस्मान्न रूपवदित्यप्रतिघप्रमाणपविपातव्यपाकृतरूपरूपप्रबलमूलत्वात्तमोद्रव्यद्रुमस्य। साधन-
सा(धी)पसीमाश्रयासिद्धिमाश्रयतीति श्रमणनिश्रेण श्रावणीयं, भास्वरभास्वदादिसम्बन्धिवस्त्वभावस्वभावस्य
तमसोऽस्माभिः स्वीकारात्, अथ—"वातोद्धूतनिकेतकेतुचपलव्यालः पयोमानुपीभूतानर्गलपांशुलः सलिलभू-
-माश्रयासिधि-A, -मश्रायसीमाश्रयासिधि-B, (भा.१०२६) -भू

कुम्भीयमानाचलः। माणिक्योपमदीपकः प्रवहणप्रायालयः फेनिलस्ताराभिस्तिमिरांभिधराप विपुलां पश्यामि तच्छ्यामिकः ॥९॥" इत्याद्युल्लेखशेखरितास्खलदध्यक्षादिबाध्यसाध्यतया कालात्ययापदिष्टं कथमिव स्यादिदं विप्रदिष्टं ?, मैवं, लेखनीयखनीलिसकृतस्खलनायामपि तद्रूपितानुमानप्रवर्त्तनवदिहाप्यनादीनवमनुमानप्रवृत्तेरुपपत्तेः। न च तथापि सत्यग्निशैत्यप्रभृत्यसत्यप्रयोगानामनिरुद्धप्रसरतया कालात्ययापदिष्टतापदप्रष्ठतामुपेता किमङ्गीकुर्याच्छरणमिति वाच्यं, तत्र तत्रोभयवादिसंमतप्रबलबाधकप्रमाणे परिपोस्फुरीति तस्याः साधारतासम्पत्तेः, प्रकृते तस्याभावात्, नापि जल्पाजिविजये वज्रस्तम्भतां बिभ्रदेतदनुमानमाणिक्यपीठप्रतिष्ठः स्वरूपासिद्धिरूपासिद्धिधाकरणविप्रयो हेतुरेषः, कदाचिदपि तमसः स्पर्शनस्पष्टतायाननुभवात् । "यद्येवं न तदोरुशार्वरतमस्यन्दोलितः श्रीमतश्छिद्रापेतकपाटकापवरके पल्यङ्क आफल्यते । यद्वा कौतुकमीलिताक्षिकमलद्वन्द्वस्य पुंसः करव्यापारादिह नास्ति वास्ति तम इत्युत्पद्यते प्रत्ययः ॥१०॥" न च दीपकदीधितेरिवानुद्भूतस्पर्शतया विरलावयवतया च तस्य तदुभयं नोपपद्यत इत्युत्पद्यमानमनवद्यं, यतो जातु घस्लप्रदीपप्रभायामुष्णस्पर्श उपलभ्यते भास्वररूपेण च तदनुपलम्भेऽपि तदनुमानं भवेत्, तमसि तु न कदापि स्पर्शोपलम्भो, न च रूपात्तदनुमानं, तस्य प्रमाणेन पराकरणात्। अथ तिमिरं रूपि तदा, भ्रमरमरिचकं चकास्ति तत्र कुतः। इति यदि हृदि सन्दिग्धे, त्वदादिरादिश्यते तदिदम् ॥११॥ सर्वे चाक्षुषाः पदार्थाः आलोकसहकृतविलोचनविलोक्या, यत्र चालोको न स्यात्तत्र भावनिभालनाभावे भ्रान्त्या शुभ्रेतरताप्र-

तीतेर्द्भवः । किं हि प्रकाशेऽपि निमीलितनेत्रस्य प्रलीनदृशो वा भावादर्शने सर्वं जगदञ्जनपुञ्जनिमग्नमिव नावभासते ? किं किंचिद्रूपं चिद्रूपमन्येन माध्य(न्यं)तमसः ? ततो युक्तिमयौक्तिकमौक्तिकलतामालभारिणी रमणीया साध्यसिद्धिरमणी तिरस्कृतप्रतिकूलजल्पानल्पान्धकारशङ्काविकटकण्टकोद्धारसाधुना साधनाध्वनाऽऽगत्य प्रतिज्ञातुल्यपल्यङ्कनिःशयालुं पक्षप्रियपुमांसं समाश्लिपत । अथ "कुर्वाणे मयि कुम्भिपाटनचिकीःपञ्चाननापाटनन्यायात्ताचक्रयुक्तिगुम्फयुगपक्कंसाय तूष्णीकताम् । स्वच्छन्दं यदियंत्त्वयोदितमिह प्रामाणिकानाममलङ्कर्मीणं हृदयानि कार्म्मणयितुं कर्म्मे(कुर्मः)किमप्युत्तरम् । १२ ।" यथा भोः सर्वान्तर्वाणिपार्वणशर्वरीवरयितुर्वारिपीवरपयोदसोदरं तिमिरमिति या प्रतीतिर्वरीवरीतीति भ्रातरदभ्रां तां भ्रान्तं मा तावदभ्युपगंस्थाः । वेगवत्तरनौवर्त्तिनो धावत्तर्वादिसंवित्तेरिव तस्याः पुरो बाधकाभावात्, प्रक्रान्तप्रयोगस्य चापि कूर्परकोटिसंटङ्कितगुडग्गण्डलेहनलेख्यंत्वात् । तमोऽतमोऽनीरूपमगन्धत्वान्मरुद्वदित्यसात्तद्बाधेतिचेत्, तत्र चित्तं नः प्रीतिमश्नुतनुते, यतो गन्धप्रतिबन्धितया बन्धूकृतपम्पाकजस्पाकजं कृष्णरूपं तन्निवृत्तौ निवर्त्ततामिह च पुनरपाकजः कालिमा कथं निवर्त्तेत ? । यथा चानुष्णाशीतस्पर्शः पृथिव्यां गन्धाभिव्यासो मारुते तद्विरहितेऽप्यनुभूतेरेव भवताऽभ्युपगम्यते तथा गन्धानधिकरणेऽप्यन्धकारे मेचकरूपमबाधं बोभवदनुभवबलादभ्युपेयम् । अथ जल्पाकपाकजयिना पाकज एवानुष्णाशीतस्पर्शो गन्धानुगन्ता कम्पाके तु सोऽपाकजस्तत्र तदभावा(त्र)भविष्णुरिति भणिष्यते, तर्हि श्यामिकापि पाकजैव गन्धप्रतिनिधि(बन्धिनी,)तमसि पुनः सौ-

सा नौ

पाथिकीति कुतो गन्धापगमगत्वरी(ति) तुल्यमेवोत्तरम्। "नन्वालोकसहायसंगतदृगालोक्यस्त्रिलोक्यन्तरे, वर्त्तिष्णुः सकलोऽपि रूपविषयस्तेनान्धकारोऽप्यसौ। श्यामः स्याद्यदि तत्प्रकाशवियुतीभूयाक्षिसाक्षात्कृते, नाक्षत्रं भवतीति बाधक इह प्रत्यक्षताऽसम्भवः। १३।" इतिचेन्नेदमपि वादीः, आलोकविरोधितां दधतः ध्वान्तस्यालोकाभाव एवोद्भविष्णुतयाऽऽविद्धियुतनयनविषयत्वोपपत्तेः, नो चेदालोकाभावोऽपि नालोकविकलाम्बकविलोकनीयः रूपवदभावत्वाद्यथा कुम्भाद्यभाव इति प्रतिभाषणे का गतिः?, हन्तेह पक्षव्यावृत्तसपक्षव्यापकालोकी विरुद्धतालक्षणोपाधिरेवाधिरेवाम्बुवाहोत्तारणतरी वरीवर्त्तीति चेत्तदापक्रान्तसूचितप्रत्यक्षताऽसम्भवप्रयोगेऽप्ययमुपाधिः समानः। नचालोकसचिवमेव लोचनं गोचरयति रूपाणीत्येकान्तः प्रामाणिकान्तःकरणकान्तः, मूषकमार्जारादिचक्षुषामन्धतमसेऽपि वस्तु विषयीकरणात्। ननु भोः कलन्दिकामन्दाकिनीकेलिकलहंस! कलहं समुत्सृज्य त्वमनुयुज्यसे यदि यथा तद्व एव तमसि तमालमालाश्याममातन्नि(ले नि)मीलितदृशोऽपि कथं तदुपलम्भः? रूपस्य दृष्टे व्यापारवत्त्वादर्शनात्। सत्यम्, तत्रापि सङ्घटितपक्ष्मपुटमध्यसंदष्टि स्वतिनिकटमपि तमःपटलमक्षिव्यापारादेवोपलभ्यते संविदावरण, कर्मक्षयोपशमस्य वैचित्र्यात्। यस्तु ललाटंतपतपनातपतापितस्यापवरकप्रविष्टस्य कतिपयप्रकाशावयवसंभेदादनीरन्ध्रतां दरिद्रत्यपि तमसि मसिस्तोमसान्द्रतावगमः, स हि मिहिरमहोविहितदृगुपहतिहेतुको भ्रमः। अत एव क्रमात्तदुपघातविरामे यथावदसौ पश्यत्यपवरकवर्त्तिनो भावानच्छां च तत्र च्छायां, सा च सान्द्रापि धत्ते पदार्थान्न

तेजसा पिरलीकृता। तदेवं रूपव्यवस्थापनप्रपञ्चेन सर्वं चाक्षुषा इत्यादि यदवादि, तन्निरासः प्रत्यपादि। तथा
"ध्वान्ते रूपवर्ति(नि)प्रतिष्ठितवति श्यामत्वसम्यग्धिया, साध्यं बाध्यतमं दधत्यनुमितिः सत्या यदि स्यादियम्।
रूपाभावपलेन तर्हि मरुतोऽप्यस्पर्शवत्त्वानुमा,नैवाकीर्त्तिरिवाधजात् स्खलयितुं शक्त्या स्फुरन्ती सती। १४।"
ननु यदि तमःश्यामता सम्यग्दृश्या मता तर्हि सादृश्यात्तस्या वयस्या व्योम्नः श्यामिकापि स्यात्तात्त्विकी;
न, तस्या निरवयवत्वादिना प्रतीयमानतयाऽभासरूपत्वात्, अन्यथा किं नासन्नाकाशेऽपि साऽऽलोक्यते।
यत्र यत्र तयोर्भयादीत्यायुक्तं,न तद्युक्तं,जलौघरुहदर्शितप्रयोगेषु बाधकस्यादित एवोभया(यवा)दिसांमत्यास
म्भवात्,किंतथापि पी(पा)यके हेतौ कालातीतत्वं,तचेह साधितमले नाद्धे(धि)त किं बाधितविषयतां स तव हेतुः।
ननु भो! निरवयवम द्रव्यमन्तश्चिचामतश्चेत्तमः पदार्थस्तदा किं नित्योऽनित्यो नित्यानित्यो वेति "आन्वीक्षिकी-
पदमस्मधुरेण, साक्षान्निपक्षयिचलीविलासम्। त्वां दक्षतालक्षितमीक्षमाणा, साकाङ्क्षदृग्वीक्षयति स्वकीयम्
।१५।" न तावन्नित्यस्तस्य प्रत्यहमादित्यदीधित्यपास्यमानतादर्शनात्। अनित्यश्चेत्तदुत्पादने किमुपादानं? यदि
परमाणवस्तर्हि ते स्पर्शवन्तस्तद्विरहिता वेति प्रकारावन्धकारपराकरणराकामृगाङ्करविकिरणकारि-
णावुदगेते। तत्र न स्पर्शवन्तस्तज्जन्यवस्तुनि स्पर्शानुपलम्भात्। अथ भोः पृथुमज्ञपार्थिवाः! प्रथन्तु एव शीत-
स्पर्शाणित्तापरागिनस्य मन्दस्य या तापशान्तये वैयेन तमसि स्यापत्ती(नो)पदेशाविति चेत्तदन(व)दातं यतः—
कारागारान्धकारप्रकरभृशभृते नष्टनिद्रोपयोगी, तिष्ठत्यापादकण्ठं सुग्वहरणखलैः शृङ्खलैर्वेष्टिताङ्गः। तत्रापि

नि १८

न्यापितापप्रसरदविरलस्वेदसन्दोहदम्भाज्जाने पानीयमस्योत्तरति नरपतिप्रौढमानाधिरूढम् । १६ । यदि च तद्विरहिताः? तर्हि तामसाः परमाणवो नावयविनमारभन्ते स्पर्शरहितत्वान्मनोवदिति प्रयोगः पिङ्गजट इव जागर्त्ति जनितजागर्जेदन्धकारातिविध्वंसः । अथ नित्यानित्योऽन्धकारस्तर्हीह विधायामसाध्यं विरोधव्याधिनं धन्वन्तरिमतिनिधिरपि धीनिधिर्नि(नैनि)धुनीते, तस्माद्द्विजाचार्यविचार्यमाणमपि न केवलं द्रव्यतया भाव तयापि न संभवतीति भासामभाव एव तमः । तथा सति च तिमिरमाधारमसाधितपूर्विणस्तव कृष्णरूपस्थापनमनिर्जिततेजस्विनस्तज्जनकसज्जनवज्जानाति सज्जनसमानः । अत्रोत्तरयामो-यत्तावकं विकल्पत्रयं तत्र वयं तिनित्यानित्यमङ्गीकुर्म्मः कूर्म्मगुप्तेन्द्रियाः । समस्तवस्तूनामन्योऽन्यमनन्याभ्यां द्रव्यपर्यायाभ्यां नित्यतानित्यतयोः प्रत्ययनात्, तथाभ्युपगमे च विरोधव्याधिरनुद्भूतिराकाशकार्यताधिकारे प्रकाशयामासे । ननु भोः! शम्भोर्नभोमूर्त्तिकीर्त्तिमालतीमालयार्चयितुमेकचित्तद्रव्यं परमाणवः, पर्यायस्तदारब्धस्तमोऽवयवी, तदुभयस्थैर्यव्ययरूपं च नित्यानित्यत्वमेवेतिभवदभिप्रायं हृदयभुवि कुनाभिप्रायं वयंमवेमः, किन्तु स्पर्शो नास्ति, तत्कथं कार्यम्? सत्यम्, भो भद्रयदातुरापाद् त्वादकुरुते तव हृदि स्पर्शाभावः। परमेतदर्थं न कदर्थनीयं त्वया च मया चिन्तया चेतः। तत्र तंचितुम(तंवितुम्)लं साधयितुमलम्भूष्णुः स्वयमस्ति प्रतिभूरालोकः। स हि यदि स्पर्शवांस्तदयमपि भवेन्न चेत्तस्याप्यणूनां तदभावात्तदनारम्भकत्वप्रसङ्गोऽभिमतभङ्गाय भवेत् । यदि च स तत्रास्ति परमनुद्भूतस्तदिहापि तदुत्तरं कुर्वतः किमपि वक्रं न वक्रीभवेत् । यच्चोक्तं—तत्र स्पर्शानुपलम्भेऽपि

भाम्वररूपात्तदनुमानमिति, तद् ध्वान्तेऽपि निर्द्धारितश्यामरूपे समानः, तस्य पुनरुपलभ्यते स्पर्शः "आवास-
श्रीसरसिजदृशः काव्यकारिप्रसिद्धश्यामच्छायादिमरसभृता(ता)भ्यन्तराले हृदीव। गर्भागारे भृशभृतवति
च्छायया संचरिष्णौ, घर्मार्त्तस्याखिलतनुलता शीतलस्पर्शवित्तिः ।१७।" यथा च मन्दमन्दमरुल्लहरिपरि-
चयः पयःस्पर्शस्याभिव्यक्तिहेतुस्तथा तमःस्पर्शस्यापि स्यात्। नचासौ कारौकसि घनघटितकपाटपाटुसम्पुटे
संपद्यते, न तेन तिमिरे सत्यपि शीतस्पर्शस्तत्र प्रतीयत इति कथंकारं कारान्धकारप्रकरेण व्यभिचारो
य उक्तः स युक्तः?। एवंच यौष्माकयोः प्रथमान्तिमानुमानयोः स्वरूपासिद्धिरूपान्धकूपान्तःपातपराहतो
हेतुः, आर्हतानां तमस आरम्भकतास्पर्शवत्ताभ्युपगमादुभयविकलताकिम्पाकलताविश्रामादुपतिष्ठत(ते)विचे-
ष्टता चेह दृष्टान्तस्य(स्य) ततः स्वशिरस्ताडं पूत्कुर्वतामपि भव(भ)वतामगमद्दशमं तमोद्रव्यं। ननु भो निजनि-
श्चलवचनप्रपञ्चवाचंयमीचेक्रीयमाणवाचालापरप्रावचनिकचक्रवाला! न खल्व(स्खलित)मस्माकमीदृक्कर्म,यदेव-
मतर्कितं द्रव्यमागच्छेत्,अभङ्गुरभाग्याभोगभूषितभूमानां भवादृशामेव तथा द्रव्यागमसम्भवात्। अतोऽन्या-
नुविधायितया तद्गुणादि किं विघटते? ननु द्रव्यमिति चेत्, नायमाशयशयशयनीये शयानः संशयः शो-
भनः श्रीमतामतानवनवभक्तिभङ्गीभागीरथीसभाजनसञ्जातपातकव्रातशातनोद्भूतशुभकर्मानुभावादुत्तमा-
ङ्गशृङ्गादेरसंभविनोऽपि भवितुमर्हतया तमोद्रव्यतावतारवार्त्तायाः स्तोकत्वात्तथाहि—ननु कस्येदमनुविधायि

किमालोकावारकातपत्रादेः? किंवा स्वनिवर्त्तकदीपादेः? इत्युद्भवत्युद्भ्रयदिभिर्दोर्युगली दोर्युगललीलेव भीमस्य। तत्र नाद्यश्चेतश्चारी विपश्चितां, निश्चलेऽप्यचलादौ तच्छायायाश्चलनोपलम्भात्। द्वितीयोऽप्यतिभृताम्भस्कुम्भस्योदबिन्दुरिव बहिरेव पतति, तेन साकं तस्य प्रतिकूलवृत्तिप्रतीतेस्तद्यथा–पत्रया गच्छति सत्युपेत्य निकटं स्वेदातिरेकोज्ज्वरीक्ज्भदीपकदम्भमूर्त्तिमदनो गोरोचनश्यामला। आलोके निजभोक्तरि व्रजति सत्यायाति च द्राक्तरां पृष्ठे कातरमानिनी किमु निशि च्छायेयमच्छेतरा?। १८। विरोधित्वाच्च कथं तदनुविधानोपपत्तिः। नच द्रव्यं न द्रव्यान्तरानुविधायकान्तपार्थिवद्रव्योपष्टम्भेनाकरजकनकादिरूपस्य जात्यमाणिक्यादिसंपर्किणो वा तेजोद्रव्यस्य स्थितिपतनादिक्रियादर्शनादुक्तंच–"कण्ठालिङ्गनमश्रमं विलुठनं पीनस्तनोरस्तटे,हस्ताम्भोरुहलालनं मृगदृशो गण्डस्थलीमण्डनम्। श्रोणिस्पर्शनमंह्रिपद्मपतनं किं भूयसा तेजसः, सर्वं सौख्यमभून्मणेरधिगमे धिक् चन्द्र चन्द्रद्युतेः। १९।" तत्रान्यानुविधानादप्यद्रव्यमाशङ्केथाः। यदिच काप्यद्यापि विद्यापिकीचूतोद्याने हृद्याशङ्कालता वाद्कुला बद्धा तर्हि साऽप्येतर्हि प्रकाश्यैव, परं न्यायनिष्ठुरनरेशानशासनरेखाञ्जन इवान्धकारो द्रव्यतां नातिवर्तिष्यते। एवं सत्यालोक इव सत्यानेकगुणं वसत्यारामादौ तमस्तेन स्रस्करेत्यापि मृषोद्यं न किं? आचक्ष्यते स्म च रोमाञ्चकचतुरमचर्चिकाश्रीराजशेखराचार्यैः—मादित्वान्नाशित्वादालोकतमोऽभिधानराशियुगात्। निजसामग्र्युत्पादान्नालो-

कामावता तमश्छाये । २० । तस्मादालोकावरणादिसहकारिणा सापेक्षं विश्रसापरिणामसम्पन्नपरस्परनैरन्तर्यावस्थानलक्षणबन्धयादरीभूतसर्वशक्तिमयपरमाणुसमूहस्वरूपं स्पर्शरसरूपगन्धपरिणामसंयोगविभागादिगुणं गमनादिक्रियाकारि तेजोविनश्वरं दशमं तमोऽपि द्रव्यं सिद्धिमध्यारोहत् । तथा सति च स्वैरं सर्वेनि(दो)र्वदन्तु विदुरंमन्याः परे वादिनः, स्वं देवं पुरवैरिणं भवति यत्काणापि राज्ञी निजा । श्रद्धेयः सुधिया तथाविधतया न त्वन्धकारादिकं, द्रव्यासव्यभिचारकेवलनवद्रव्याभिधानेन सः । २१ ॥ तमोद्रव्यताव्यवस्थापनस्थलम् ॥

तदेवं दर्शितदिशा विसंवादार्थवादित्वादितिहेत्वादिभ्यः स्फुरदसिद्धिनीरन्ध्रनीरदपटलदलनोज्ज्वलाभिस्तमोभावसाधनप्रत्यलाभिस्तादृग्गोभिस्तावकहृत्कमलमुल्लास्य शर्वसर्वज्ञतादिकुग्रहभृङ्गकुलनिश्चितिः कासयतात् सल्यस्ता(संन्यस्ता) भारतीधर्मतनुभूवैभाष्याणाभीमाभूमीभावुकोऽर्भकभावेपि योगभृतां भवतां भापिताभोगशुभोदकाभ्युपगमः॥किंतु"केनेदं सचराचरं विरचयांचक्रे जगत्तत्पुनः,स(ल)लोकोत्तरसंविदे(स)मुकुरे संक्रान्तमालोक्यते । किं यक्षाणि कियन्ति कानि जगति द्रव्याणि चेति त्रयं, वक्तुं त्वद्रसनासुखासनंसनासीना श्रुतस्वामिनी । २२ ।" यद्येवं तदा प्रियजीवितपदाजिवद्विशदसौजन्ये जागरूकाः श्रीजानकीजानिजनकवदशोधितपरासौधवद्धाकौशल्याभोगवन्तः स्वकर्णयोः पीयूपयूपं(यूषं) पाययध्वं, यथा न तावदिदं पुरारिपुरुषोत्तमपुराणपुरोगेण केन निष्पादितं, परं तदुपरिवर्त्तिसर्वकर्त्तव्यकर्मठकर्मप्रेरणादिसहकारिसाहायकसहित-

॥ २२ ॥

निजनिजोपादानजं, न जात्वनीदृग्भावं जगिमवज्जगद्धियते । तच्च कर्मैधःस्तोमधक्षीव्रतपोऽनलकृतमलापोज्ज्वलत्कुर्वदात्मैकचामीकरप्रस्मरपुञ्जमञ्जुलविमलकेवलज्ञानवन्तोऽनेके भवस्थाः श्रीसीमन्धरप्रभृतयः, निर्वृताः पुनरनन्ताः करतामरसमुक्तमुक्ताफलव्यक्तमालोकते । तथा धर्माधर्माकाशकालपुद्गलजीवाः षड् द्रव्याणि । तत्र मत्स्यानामम्भ इव गमनप्रवृत्तानां जीवाणूनां गत्युपष्टम्भकृद्धेतुर्द्धर्म्मः १, पशूनां पृथ्वीव स्थायु(यु)कानां तेषां स्थित्युपष्टम्भकृदधर्म्मः २, मोदकानां मणिक इवाऽवगाहकानां धर्म्मादीनामवकाशदं सर्वगमाकाशं ३, वर्त्तनालक्षणो नरक्षेत्रवर्त्ती समयादिबहुभेदः कालः ४, वर्णगन्धरसस्पर्शमानात्मानो विचित्रपरिणामाः स्कन्धदेशप्रदेशाणुभेदाः प्रयोगविश्रसाभ्यां पूरणगलनधर्माणः पुद्गलाः ५, शुभाशुभकर्मकृत्तत्फलभोक्ता वपुःपरिमाणः परिणाम्युपयोगरूपः षट्कायो जीवः ६, "रूपं पञ्च विपुद्गला न दधते पञ्चास्तिकाया विना, कालं पुद्गलजीवयुग्मवियुताश्चत्वार एवाक्रियाः । आद्यौ लोकनभोविभू तदपरे भोस(ग)भ्रमव्यापृताः, मन्त्येषु क्षितयेऽन्तिमा इति षडप्यस्तोकवाच्यास्पदम् ।२३।" अमीषां च सव्यासव्याख्यायामूहमत्यूहादिना ग्रन्थान्तरमिव स्वादतो गीतवादित्रयोर्दत्तं सारमिति न्यायेन तत्त्वमाकर्ण्यताम् "शुद्धद्रव्यस्थितिबुधपरीक्षासु लब्धमर्कमुद्रां विश्वत्रिभुवनजनस्यापि नामानुरूपाम् । सर्वाभीष्टार्प्पणपटुकलं टङ्कशालीयमन्तश्चेतोभूमि न्यसितुमुचितं शासनं जैनमेव ।२४। तं जागर्ज्जेदनल्पजल्पजलधेरुत्तीर्य तत्तीरसत्ताम्बूलीतुलिताःश्रयंस्त-

दनु तास्ताश्चङ्गरङ्गाः स्तुतीः । चञ्चच्चारुवचःप्रपञ्चनचमच्चक्राणचेतोऽञ्चितो, भट्टेशोऽर्भकभारतीति यतिनं मध्येसभं सोऽभणत् । २५ । एवं निर्भरशङ्करस्फुरदहङ्कारान्धकारोत्करध्वंसोल्लासिमहःसमूहदशदिक्कुक्षिंभरैः कोविदैः । सोत्कण्ठं निजकण्ठकर्णहृदयालङ्कारतां लम्भितः, श्रीमानप्रथयज्जने स मुनिपो नामार्थमाणिक्यताम् । २६ । अस्ति स्वस्तिकरस्तमस्तिरयिता श्रीनन्दिरत्नो रविस्तत्पादप्रणये परायणतया कोकायते यः कविः । श्लिष्टस्तत्कृतजल्पकल्पलतिकामैकादिमन्यस्वकासिद्ध्याख्यस्तवकस्तृतीय उदयांचक्रे सुधीमण्डलः (न) ॥ २७ ॥

नः

इति श्रीतपागच्छशृङ्गारयुगोत्तमगुरुश्रीसोमसुन्दरसूरिराजपट्टपाथोधित्रिपथगाप्रवाहोपमश्रीमुनिसुन्दरसूरिश्रीजयचन्द्रसूरिश्रीरत्नशेखरसूरिशचिपतिशिष्यरत्नमण्डनकृतायां जल्पकल्पलतायां मण्डनाङ्कः खण्डेन्दुमुकुटैक्यादिखण्डनस्तृतीय स्तवकः समाप्तः ॥ ३ ॥

तत्समाप्तौ समाप्तश्चायं ग्रन्थः ।

---

# आ संस्था तरफथी मुद्रित थयेल ग्रन्थोनुं सूचीपत्र.

इति श्रीमद्रत्नमण्डनकृता श्रीजल्पकल्पलता समाप्ता।

इति श्रेष्ठि-देवचन्द्र लालभाई-जैनपुस्तकोद्धार-ग्रन्थाङ्कः ११.